अथ नवमी।

३ १२ ३१२ ३२३ २१ १२३१
पुनानःसोमजागृविरव्यावारैः*परिप्रियः।
१र २र ३१
त्वंविप्रोअभवो†ङ्गिरस्तम
२३ १२
मध्वायज्ञंमिमिक्षणः‡ ॥८॥ ५३¶

५ ३ २१ २१ २ ४ ५
२३४दाम्। समुद्रस्या। धिविष्टपाइ। मनाइषाइणाः।
१ १२१ १ ३ ५२२ ३ ५
मात्सरासोर२३। मार्दा२३४औहोवा। च्यूर२३४ताः॥२१॥५२

"आयवः"§ गमनशीलाः "सोमासः" सोमाः मद्यं" मदकरं मदं आत्मीयं रसं "अभिपवन्त:" अभितो निर्गमयन्ति। कुत्रेत्युच्यते—"समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रितपवित्रे। यद्वा। समुद्रस्य यस्मात्समुद्रवन्ति रसाः तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने "पवित्रे" निर्गमयन्ति। कीदृशाः? "मनीषिणः" मनसईशितारः "मत्सरासः" मदकराः "मदच्युतः" मदकरेण रसेन च्यावयितारः॥

"विष्टपे", "विष्टपि"—"मदच्युतः", "स्वर्विदः"—इति च पाठौ॥ ८॥ ५२

* "अव्योवारे"-इति
† "वोङ्गिरस्तमो"-इति, } ऋ०।
‡ "मिक्षतः"-इति च

¶ ऋ० ७, ५, १३, १।

§ 'आयवः मनुष्याः'-इति वि०। 'आयवः'-इति मनुष्यनामसु पठितं नैघण्टुकम्(२, ३)।

अथ दशमी ।

१ २　　२ ३ ३ १ २ ३ १ २ ३ २
इन्द्रायपवतेमदःसोमोमरुत्वते सुतः ।

५ र ४ ५र ४र ५ ४　　१रर
(सोमसाम ॥) पुनानःसोमजागृविरव्याः । वारैःपा-

७　　१ र र　　१ २
रिप्रिया २ः । त्वंविप्रोअभवोङ्गाइरा२३४ । स्तमा२ ।

१ २र १　　१ ३ ५र र　　३ ५
माध्वायज्ञा२३म् । मा२इमा२३४औहोवा । त्ता२३४णाः ।

॥ २२ ॥ ५३

हे सोम ! "जागृविः" जागरणशीलः "प्रियः" प्रीणयिता* त्वं "पुनानः" पूयमानः सन् "अव्याः" मेष्याः "वारैः" वालैर्निर्मिते दशापवित्रे परिचरसि । "अङ्गिरस्तम" हे अङ्गिरसां वरिष्ठ ! "विप्रः" मेधावी त्वं पितॄणां नेता "अभवः"† भवसि । स त्वं "नः" अस्मदीयं "यज्ञ" "मध्वा"‡ मधुना आत्मीयेन रसेन "मिमिक्ष"§ सेक्तुमिच्छसि । मिहेः सेचनार्थस्य (भ्वा०प०) सनि रूपम् ॥ ८ ॥ ५३

* 'प्रियः प्रियतरः भूतानां प्रियः'-इति वि० ।

† 'सार्वकालिकोलङ्' (३, ४, ६) ।

‡ सुप आले रूपम् (७, १, ३९) ।

§ 'मिमिक्ष सिञ्च' इति वि० ।

३ १ २ ३ १२ ३२ ३
सहस्रधारो अत्यव्यमर्षति
१ २ ३ १ २
तमीमृजन्त्यायवः ॥ १० ॥५४*

५ २ २ ० १ १२ २
इन्द्रायपा। वता२इमादा२ः। सोमोमरुत्वता२इ-
१ १ २२ १ १
त्वता२ः। स। हास्रधारः। अतिअव्यमा२र्षाती२।
१ १ २ १
तमा२इमार्जा२। तिआयार३वा३४३ः। ओ२३४५इ।
डा ॥ २३ ॥

५ २ २ २ १
(स्वःपृष्ठमाङ्गिरसम् ॥) इन्द्रायपा। वतेमदाः।
२२ २ १ १ १ १ २२
सोमोमारु२। त्वतेचो२इ। त्वता२ः। स। हास्रधारः।
१ २ २ ५ २ ५ १
अतिअव्यमा। षाताओ२३४वा। ज२३४पा। तमीचो-
१ १२ २ १
२इ। मार्जा२। तिआया२३वा३४३ः। ओ२३४५इ।
डा ॥ २४ ॥

५ २ २ ४ ५ ४ ५ १२ २
(सोमसाम ॥) इन्द्राया३पावताइमदाः। सोमोम-
२ २ १ २२ १ २
रुत्वता१इत्व३ताः। स। हास्रधारः। अतिअव्यमा३।

---

* ऋ० ९, ४, १५, २।

अथैकादशी ।

पवस्ववाजसातमोभिविश्वानिवार्य्या ।
त्वꣳसमुद्रःप्रथमविधर्मं
न्देवेभ्यःसोममत्सरः ॥ ११ ॥५५ *

षाती । तमा३औ३होऽ३इ । मार्जा । ता२या२३४औहो
वा । या२३४वाः ॥ २५ ॥

पवस्ववाजसा । इहा । ता२३४माः । अभिविश्वा-
निवारिया । त्वꣳसा२मू२३४औहोवा । द्रःप्रथमे विधर्म-
न् । दाइवाये३ । भ्या२ःसो२३४औहोवा । ममत्स-
रा१ः ॥ २६ ॥ ५४

"मदः" मदकरः "सुतः" अभिषुतः "सोमः" "मरुत्वते" मरुद्भिस्सहिते "इन्द्राय" इन्द्रार्थं "पवते" क्षरति । ततः "सहस्रधारः" बहुधारोपेतः सोमः "अव्यम्" अविमयं पवित्रम् "अत्यर्षति" अतिगच्छति तमिमं "आयवः" मनुष्या ऋत्विजः "मृजन्ति" शोधयन्ति ॥ १० ॥ ५४

* ऋ० ७,४,१६,२ ।

अथ द्वादशी ।

१ २ १ २३१ ३ १ १

पवमानाअसृक्षतपवित्रमतिधारया ।

३ १ २ ३ १ २ ३ १ २ २ २

मरुत्वन्तोमत्सराइन्द्रियाहया

७ २ ३ १ २

मेधामभिप्रियाꣳसिच ॥१२॥५६ *

॥ इति तृतीय-दशति ॥

४ ५ २ २ ४ १ २

(पवित्रम् ॥) पवमानाअसृक्षतपवाइ । त्रामतिधार

हे "सोम !" "विश्वानि" सर्वाणि "वार्या" वरणीयानि स्तोत्राणि† "अभि" लक्ष्य "वाजसातमः" अतिशयेनान्नस्य लम्भकस्त्वं "पवस्व" चर । हे सोम ! "देवेभ्यः" देवानां‡ "मत्सरः" मदकरः "समुद्रः" समुन्दनशीलः¶ "विधर्मन्" विशेषेण पोषक ! || त्वं "प्रथमे" मुख्ये श्रेष्ठे यज्ञे देवेभ्यस्तदर्थं चर ॥

"विधर्मन्"-"विधारयम्"-इति, "वाजसातये"-"वाजसातमः"-इति, "वार्या"-"काव्या"-इति च क्रमेण साम्नश्च पाठाः ॥ ११ ॥ ५५

---

* ऋ० ७, ५, १६, ५ ।

† 'वार्या वरणीयेन उदकेन' इति वि० ।

‡ "षष्ठ्यर्थे चतुर्थीति वाच्यम्"—इति का० (पा० २, ३, ६२) ॥

¶ "समुन्दन्तीतिवा" इत्यादि निरुक्तोक्तेः (२, १०)। 'समुद्रः समुद्रसंस्थानीयः' इति वि० ।

|| "विधर्मन्=विधर्मणि. विविधकर्मणि कर्मकारणे देवे' इति वि० ।

१　२　२ २ १　　१　　२
यामरुत्वन्तोमत्सराइन्द्रो३याः। च्याः। मा२३इधाम्।
१　२　१　३　५ २ २　　३　५
अभाये३। प्रा२या२३४औहोवा। सी२३४चा॥ २७ ॥५६

"पवमानाः" पूयमानाः सोमाः "धारया" आत्मीयया "पवित्रम्"* "अति" अतीत्य "असृक्षत" सृज्यन्ते। कीदृशाः? "मरुत्वन्तः" मरुद्भिर्युक्ताः "मत्सराः" मदकराः "इन्द्रियाः" इन्द्रजुष्टाः। "मेधां"† स्तुतिं "प्रियांसि" अन्नानि च "अभि" लक्ष्य स्तोतृभ्य उभयं कर्तुं वा "इयाः" यज्ञे गन्तारः सृज्यन्ते ॥१२॥५६

इति श्रीमत्सायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य पञ्चमखण्डः॥ ५ ॥

॥ इति बार्हतम् ॥

---

* "पवित्रं पुनातेः। मन्त्राः पवित्रमुच्यन्ते। 'येन देवाः पवित्रेणात्मानं पुनते सदा' इत्यपि निगमो भवति॥ रश्मयः पवित्रमुच्यन्ते। 'गभस्तिपूतो नृभिरद्रिभिः सुतः' इत्यपि निगमो भवति॥ आपः पवित्रमुच्यन्ते। 'शतपवित्राः स्वधया मदन्तीः' बहूदकाः॥ अग्निः पवित्रमुच्यते। वायुः पवित्रमुच्यते। सोमः पवित्रमुच्यते। सूर्यः पवित्रमुच्यते। इन्द्रः पवित्रमुच्यते। 'अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु' इत्यपि निगमो भवति" इति (नि० ५, ६)।

† 'मेधां प्रज्ञाम्'-इति वि०।

अथ षष्ठखण्डे—

सैषा प्रथमा।

१र २र३१२३१२ ३१२ ३१ १ ३ २३१र १र
प्रतुद्रवपरिकोशंनिषीदनृभिःपुनानोअभिवाजमर्ष।
३१२३ १२३२३११ २ ३
अश्वंनत्वावाजिनंमर्जयन्तोच्छा
१२३१ २
बर्हीरशनाभिर्नयन्ति॥१॥५७*

२ ३५ ३१ २१
(अशनम्॥) ओइप्रतु। द्रुवा३१। द्रवा। परि
२ २३४५ २ २५ ३२ २१
कोइ। अभिषीदा। औइनभिः। द्रुवा३१। पुना।
२ १ २३४५ २ २४ ३२ २१
नोइअभि। वाजमर्षा। आअश्वम्। द्रुवा३१। नत्वा।
२ १ २३४५ २ ३५ ३२ २१
वा३जिनम्। मर्जयन्ताः। ओअच्छ। द्रुवा३१। बर्हीइः।
१र २ २ ४
रशना। भा३४३इः। ना३या५न्ताई५६इ॥२८॥

४५ ४५ २१ २१
(वृषोशनं साम॥) प्रतु। एप्रतू। द्रवा। द्रवा।
२ २३४५ ४५ ४५ २१
परिको३। अभिषीदा। नृभिः। एनृभिः। पुना।
२१ २१ २३४५ ४५ ४५
पुना। नो३अभि। वाजमर्षा। अश्वम्। एअश्वाम्।
२१ २१ २ १ २३४५ ४५ ४ ५
नत्वा। नत्वा। वा३जिनम्। मर्जयताः। अच्छ। एअच्छा।

* उ० १,१,१०,१=ऋ० ९,१,९२,१=अथे १,१,४—१९,१,७।

२ १ २ १ २ १२ २ २१ ५ ५
वर्चाइः। वर्चाइः। रथनाभिः। नये३४। छियाइचा-
२ ११११
उवा। तार२३४५इ॥ २९॥

४५४ १ २
(जानस्याभीवर्तौहौ॥) प्रतुद्रा। वापरिकोशम्।
२ २ १ २ १२ २ १२ ऽ २ १
निषीऽदा। साइदा। औहोइ। औहोऽवा। नृभिः
१२ ० २ १ २ १२ २
पुनानोअभिवा। जमार२र्षा। आर्षा। औहोइ।
१२ ऽ २ १ २ २ ०
औहोऽवा। अश्वन्नत्वावाजिनम्मा। अया२३न्ता:।
१ २ १२ २ १२ ऽ २ १२२१ २
र्याता। औहोइ। औहोऽवा। अक्षावर्चाइः। रथ-
१२२ २२ ५ ५ २०११११
नाभिः। नये३४। छियाइचाउवा। तार२३४५इ॥ ३०॥

५२ ५ २ २ ५ ५ १ १
चाओाइचा। उऊवा३४। ओइचा। प्रतुद्रवा।
२ २३४५ ११ २१ २ १
परिकोऽ। अन्निषीदा। नभाइःपुना। नोऽभि।
२ १४५ २ १ २ १ २२४५
वाजमर्षा। अश्वन्नत्वा। वाऽजिनम्। भर्जयन्ता:।
२ ५ २ २ ५ ५ २१२ २ १
चायोइचा। उऊवा३४। ओइचा। अक्षावर्चाइः।
२१२ २ २ ४
रथना। भा२४३इ:। नाइयापु०ताई५६इ॥ ३१॥

४ ५ १ र
(त्रिष्टुवौशनम्॥) प्रान्। द्रवापरिकोशाम्।
१ २ १ २१ २ १ १ २ ३ ४ ५
निषीश्दा। नृभाइ:पुना। नोइअभि। वाजमर्षा।
१ र र ७ २ १र २ र
अश्वन्नत्वावाजिनम्मा। जयार२३ंताः। अच्छावर्हीइः।
११र २ १ ४
रशना। भा३४३इः। नाइयाप५ंतार्इ५६इ॥ ३२॥ ५७

उशनाऋषिः*। हे सोम! "नु" क्षिप्रं † "प्रद्रव" प्रगच्छ आगत्य च "कोशं" द्रोणकलशं परिनिषीद" निषण्णो भव। "नृभिः" नेतृभिः "पुनानः" पूयमानः "वाजम्" अन्नं यजमानार्थमुद्दिश्य "अभ्यर्ष" [वाजं सङ्ग्रामं वा] "वाजिनं" बलवन्तं "अश्वं न" अश्वमिव त्वं यथामार्जयन्ति तद्वत् त्वाम् "अर्जयन्तः" शोधयन्तः "बर्हिः" यज्ञम् अच्छ "प्रतिरशनाभिः" रशनावदायताभिरङ्गुलीभिः "नयन्ति" अध्वर्युप्रमुखाः॥ १॥ ५७

---

* "काव्यः"-इति ऋषि नै०।

† 'अच्छ आप्तुम्'-इति वि०। मन्त्रश्रुतौ 'अच्छा'-इति दीर्घो निपातत्वात् (६, ३, १३६ पा०।)

‡ 'रशना यूपयोजनी'-इति वि०।

¶ "नु-इत्येषोऽनेककर्मा, इदं नु करिष्यतीति हेत्वपदेशे, कथं नु करिष्यतीत्यनुपृष्टे, नन्वेतदकार्षीदिति चाप्युपमार्थे भवति वृक्षस्य नु ते पुरुहूत वयाः वृक्षस्येव ते पुरुहूत शाखाः"-इत्यादि नि० १, ४। "नु"-इति क्षिप्रनामसु च पठितमिदं नैघण्टुकम् (२, १५)।

§ 'बर्हिः यज्ञम्'-इति वि०।

|| 'रशनाः'-इति अङ्गुलिनामसु पठितं नैघण्टुकम्।

अथ द्वितीया ।

१　२र ३ १ २　३ १ २ २ ३ १ २ १ २
प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
१ २ ३ १　२　३ २
महिव्रतः शुचिबन्धुः पावकः
३ १ २ ३ २ ३क २र ३ १ २
पदा वराहो अभ्येति रेभन् ॥ २ ॥ ५८*

४ऽ　१र　१
( वाजसनीद्वे ॥ ) प्रा । काविया २म् । उशने वा २ ।
१ २　१र र　१र　१
ब्रुवा२३णाः । देवोदेवा २ । नाञ्जनिमा २ । विवा-
२ १　१　१ १
२३क्तो । महिव्राता २ः । शुचिबन्धू २ः । पवा२३काः ।
१ र　१र　२ २ ५र र　१
पदावारा २ । होअभियार३इ । तिरा३४औहोवा । भा
१ १ १ १
२३४५न् ॥ ३३ ॥
१ र　१　१　१र र
प्रकाविया २म् । उशने वा २ । ब्रुवाणा २ः । देवो
१र　१　१
देवा २ः । नाञ्जनिमा २ । विवाक्तो २ । महिव्राता २ः ।
१　१　१ र　१
शुचिबन्धु २ । पवाका २ः । पदावारा २ । होर२ ।
२ १　५र र　२ १र ३ १ १ १ १
भिया३४औहोवा । तिरेभार३४५न् ॥ ३४ ॥

* उ० ४, २, १, १ = ऋ० ७, ४, ११, २ = कर्ष ६, ९, ४ ;— १६, २, १९ ;— ११, १, ३—६ ।

२ र र १ २ २
(वाजजित्साम ॥) प्रकाव्यमुशनेवब्रू३वाणो। देर-

५ २र र र र १ २ २ ५ २
३४वा:। देवानाञ्जनिमावी३वाक्ती। मा२३४त्ती। व्रतः

१ २ २ ५ १र र र १
शुचिबन्धुः पा३वाकः। पा२३४दा। वराहोअभ्येतिरा-

२ १ १ १ १
२३। हाउवा३। भा२३४५न्॥ २५॥

५र र १ १ १र
(वाराहम्॥) हाउहाउ। इप्। प्रकावियाम्।

१ १ र १ २ ४ ५ २र१र र २ १ २ २
उशने। वब्रुवाणाः। देवोदेवा। ना३०जनि। मावि

४ ५ १ १ २ २ ३ ४ ५ र
वक्ती। मधिव्रता:। शुचिवा३। धुःपवाका:। हाउ

र १ १ १र २ १ २
हाउ। इप्। पदावरा। हो३अभि। आ३४३इ।

२ ४
ती३रा५इभा६५६न्॥ २६॥

॥ इति पञ्चदशस्याद्धः प्रपाठकः॥

इषगणो वासितऋषिः*। "उशने एव" तन्नामकऋषि-रिव "काव्य" कविकर्म स्तोत्रं "ब्रुवाणः" "देवः" स्तोता †

* "इषगणो वासिष्ठः"-इति ऋषि- नै०।

† 'देवः सोमः'-इति वि०।

अयमृषिर्वृषगणोनाम "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि* "प्रविवक्ति" प्रकर्षेण वदति। [ वच परिभाषणे (अदा०प०)। व्यत्ययेन विकरणस्य श्लुः (३,१,८५) बहुलं छन्दसीति (७,४,७८) अभ्यासस्य इत्वम् ] "महिव्रतः प्रभूतकर्मा†। "शुचिबन्धुः" बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा दीप्ततेजस्कः‡ "पावकः" पापानां शोधकः "वराहः" वरश्च तदहश्च वराहः [ "राजाहःसखिभ्यष्टच्"-इति टच् समासान्तः। तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान्। अर्शआदित्वात्मत्वर्थीयोऽच् ] तादृशः¶ सोमः "रेभन्" शब्दं कुर्वन् § "पदानि" स्थानानि पात्राणि "अभ्येति" अभिगच्छति। यद्वा। यदा कश्चन वराहः "पदा" पदेन भूमिं विक्षियमाणः शब्दं करोति तद्वत्॥ २॥ ५८

* 'जन्मानि कर्माणि वा'-इति वि०।

† 'महिव्रतः महतः कर्मणः धनस्य वा धारयिता' इति वि०।

‡ 'शुचिबन्धुः शोभनबन्धुः शुद्धबन्धुर्वा'-इति वि०।

¶ 'वराहः सोमः'-इति वि०। "वराहो मेघो भवति वराहारः। वरमाहारमाहार्षीरिति च ब्राह्मणम्। विध्यद्वराहन्तिरोअद्रिमस्तेत्यपि निगमो भवति। अयमपीतरो वराह एतस्मादेव। वृहति मूलानि वरं वरं मूलं वृहतीति वा। वराहमिन्द्र एमुषमित्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते 'ब्रह्मणस्पति र्वृषभिर्वराहैः'। अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते—'पश्यन् हिरण्यचक्रानयो दंष्ट्रान् विधावतो वराहून्'-इति नि० ५, ४।

§ 'रेभन् स्तुवन्' इति वि०।

अथ तृतीया।

१ १२ २२ ३१२ ३२ १ १ २ ३ १२ २२ १ २
तिस्रोवाचईरयतिप्रवह्निर्ऋतस्यधीतिंब्रह्मणोमनीषाम्।
१ २ ३१ २ ३१ २ २
गावोयन्तिगोपतिंपृच्छमानाः
१ २३ १ ३ २
सोमंयन्तिमतयोवावशानाः॥ ३ ॥ ५९ *

(संक्रोशाल्लयः॥) १ होइ। हो। १ १ हा३होइ।
२१२ २ २ १ २३४५ १ १
तिस्रोवाचा। ई३रय। तिप्रवह्नीः। होइया२३होइ।
२१२ २ २ १ २३४५ २२ १ १
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। आ। होइया२३होइ।
२१२ २ २ १ २३४५ १ २१
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। होइहा। इहोइहा।
५ २ २ १२ २ २ १ २३४५
औ३हो३१इ। इहा। तिस्रोवाचाः। ई३रय। तिप्रवह्नीः।
१ २१ ५ २ २ १२ २
होइया। इयोइया। औ३हो३१इ। इया। तिस्रोवाचाः।
२ १ २३४५
ई३रय। तिप्रवह्नीः॥ १ ॥
३ २ ३५ २२ १
(वैणविंशाले द्वे॥) इहोइह। इहोइहा३हो।
३२ १ ३ ५ २ १२ २ ० १ २३४५ ४२
वाहोइह। तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। इहा

* ऋ० ९,९,१०,१=म० ९,४,१७,४=ऋचे २,१,१०=ऋचो १,२,९।

वाऽ५। हुवोवा२३। ई३४वदाइ। ई५। हुवा। तिस्रोवाचाः। ई३रय। तिप्रवक्षीः। हुवोवा२३। ई३४वदाइ। हुवा। तिस्रोवाचाः। ई३४रय। तिप्रवक्षीः। आओ२वो। आओ२वो३४। ओवोवा। वा२वाइ। तिस्रोवाचाः। ई३रय। तिप्रवक्षीः। आ। ओ२वोवावा३४। ओवोवा। तिस्रोवाचाः। ई२रय। तिप्रवक्षीः॥ २॥

ओवो३। आवाआवा। ऋतस्यधाइ। तौ३०ब्रह्म। णोमनीषाम्। वदधाइ। वदवावदो३। गावोयन्ताइ। गो२पतिम्। पृच्छमानाः। इवदोइ। इवदावदोइ। सोमंयन्ताइ। मतयः। वा३४२। वा३आ५नाइ५इः॥

॥ ३॥ ५९

पराशरऋषिः*। "वह्निः" वोढा यजमानः "तिस्रो वाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति। तथा "ऋतस्य" यज्ञस्य "धीतिं" धारयित्रीं† "ब्रह्मणः"‡ परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याण-वाचं च प्रेरयति। किञ्च। "गोपतिं"¶ वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः" "पृच्छमानाः" पृच्छन्त्यः सत्यो "यन्ति" स्व-पयसा माश्रयितु मभिगच्छन्ति। तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारः§ "सोमं" "यन्ति" स्तोतु मभिगच्छन्ति|| ॥ ३ ॥ ५९

---

* "शाक्त्यः"-इति ऋषि-मं०। "पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवति। इन्द्रोऽपि पराशर उच्यते परा-शातयिता यातूनाम् इन्द्रो यातूना मभवत् पराशर इत्यपि निगमो भवति"-इति नि० नै०६,३० ॥

† 'धीतिं कर्म'-इति वि०।

‡ 'ब्रह्मणो मनीषां वेदोक्तानि कर्माणि'-इति वि०।

¶ 'गोपतिं यजमानं दक्षिणामन्वन्वेन पृच्छमाना इव, वृषभं वा' इति वि०।

§ मतय इति स्तोतृनामसु न दृश्यते पर मेधावि-नामसु द्वाविंशतितमत्वेन पट् क-मिति लभ्यते (३,१५)। 'मतयः बुद्धयः'-इति वि०।

|| यास्कव्याख्यानमित्थम् -"वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्यस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत् सर्वमक्षरमधीत्यधिदैवतम् अथाध्यात्मं वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमता मृतस्यात्मनः कर्माणि ब्रह्मणो मतान्यप एवैतत् सर्वमनुभवत्यात्मगति माचष्टे"-इति (प०१,१४)॥ विवरणकारस्तु पूर्वं यथावत् व्याख्यायानन्तरमपरमपि व्याख्यानजातसमा-विस्तृतवान् तद्यथा—'यद्यपि पावमानीषु सोममुक्त्वा अन्या देवता न सम्भवति तथा-प्यहादन्ने व्याख्यातेति कृत्वा तेनापि व्याख्यानानुसरणार्थं मालिख्यत। तिस्रो वाचः। ऋग्यजुःसामानि अथवा तिस्रो वाचः सत्वरजस्तमांसि अथवा आयतनत्रयपृष्टि-हनयः। ईरयति प्रेरयति उदकरश्मींश्च वहतीति वह्निरादित्यः। ऋतस्य आदित्यस्य

२ २ १२ ३२ ४२ ५ १ २ १
हाउ। होइ। सुता३४औहोवा। पवाइ। आ३ग्यरि।
२ १ ४ ५ २ २ १ २ ३२ ४२ ५ १
एतिरेभान्। हा। हाऔहोइ। मिता३४औहोवा। वसा।
२ १ १ २ ४ ५ १ २ २ ४
आ३पशु। मन्तिहोता। पशु। मा३४३। ती३होपु
ताई५६ ॥ ४ ॥
१२ १२ ३२ २ १ ३ २ १ २ १ ३२
औहोवाहा३होइ। इहा। अस्यप्रेषा। हे३मना।
२ २ ४ ५ २२ १२ २ २ १ २ ३ ४ ५
पूयमानाः। देवोदेवाइ। भी३:सम। पृक्तरसाम्।
२ १ २ १ २ ३ ४ ५ १२ १२ ३२ २
सुत:पवाइ। आ३ग्यरि। एतिरेभान्। औहोवाहा-
१ ३ २ १२ २ १ २
३होइ। इहा। मितेवसा। आ३पशू। मा३४३।
२ ४
ती३होपुताई५६ ॥ ५ ॥ ६०

वसिष्ठऋषिः*। "अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थः (भ्वा० प०) क्विपि रूपं। सावेकाच इति विभक्तेरुदात्तत्वं† प्रेषा] प्रेरकेण‡ "हेमना"¶ हिरण्येन "पूयमानः" हिरण्य-

* "मैत्रावरुणः"-इति ऋषि-मै०।

† "सावेकाचस्तृतीयादिर्विभक्तिः"-इति पा० ६, १, १६८।

‡ 'प्रेषा प्रकर्षेच्छया'—इति वि०।

¶ बाहुलकाद्दल्लोपाभावः।

अथ पञ्चमी।

१ २　　३ १ २३ १ २ ३२ ३ १२ ३१ २ १ २
सोमःपवतेजनितामतीनाञ्जनितादिवोजनितापृथिव्याः।
ौ १र २र ३ १र २र ३ १ २ ३ १र २र
जनिताग्नेर्जनितासूर्यस्यजनितेन्द्रस्यजनितोतविष्णोः॥५॥६१*

२र र र १
(कालकाक्रन्दो॥) सोमःपवतेजनितामाइताइना २म्।
र र र १ १२र र
जनितादिवोजनितापृइथाइव्या २ः। जनिताग्नेर्जनितासू।

पाणिरभिषुणोतीति हिरण्यसम्बन्धः। तादृशः "देवः" दीप्यमानः अंशुः "रसम्" आत्मीयं "देवेभिः" देवैः सह† "समपृक्त" सम्पर्कयति संयोजयति। [पृचो सम्पर्के (अदा० आ० ] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्म्मितं‡ "पर्येति" परिगच्छति। कथमिव? "होता" देवाना माह्वाता¶ ऋत्विक् "मितेव" निर्म्मातेव§ "पशुमन्ति" बहुपशून् "सद्म" सदनानि यजमानगृहान् यथा पर्येति तद्वत्॥ ४॥ ६०

---

° उ० ९, १, १९, १ = ऋ० ७, ४, ६, ५ = काठ० ३, २, १९; —८, २, १; —१२, १, १०—१६।

† 'देवेभिः देवेभ्यः बन्धादिभ्य'-इति वि०।

‡ दशापवित्रमित्यर्थः।

¶ ह्वयतेरिति छान्दसम् (६, १, ३४ पा०)।

§ 'मिता कर्त्ता' इति वि०।

७ २ १र २ १ २ २
रियार३स्या। जनितेन्द्रा। स्याइजनि। ता३४३। तार

४
वा५इष्णो६५६ः॥ ६॥

३ ४ ५ र र २ २ ५ १
सोमःपवतेजनिता। ए३। औ३हो५वा। माता

२ १र २ १र २ १र २ १र
२३४५इना६५६म्। जनितादिवोजनितापृथिव्याः। जना-

२ ५ १ र १ ४
२इता२३४ग्नेः। जनिता। सू३४३। री३या५स्या६५६।

१ १र २ १र २ १ १ १ १
जनितेन्द्रस्यजनितोतविष्णोर२३४५ः॥ ७॥

५र ४ ४ ५
(जनित्रे द्वे॥) हाउजनत्। ३। जनद्धाउ। ३।

१ १ २र १ २
होइ। जनत्। २। होइ। जनात्। सोमःपवा। ते३

१ २ ३ ४ ५ २ १र २ १ २ १
जनि। तामतीनाम्। जनितादाइ। वो३जनि। तापृ

५ ५ २ १र २ १ र २ ३ ४ ५ ५र
थिव्याः। जनिताग्नाइः। जनिता। सूरियस्या। हाउ

४ ४ ५ १
जनत्। ३। जनद्धाउ। ३। होइ। जनत्। २। होइ।

१र २ २ १ ४
जनात्। जनितेन्द्रा। स्याइजनि। ता३४३। ता३वा

५इष्णो६५६ः॥ ८॥

४ ५ ४ ५ १
जनद्वाउ । ३ । जनदाउ । ३ । जनत् । द्योइ । ३ ।
२र १ २ १ २ ३ ४ ५ २ १र
सोमःपवा । ते३जनि । तामतीनाम् । जनितादाइ ।
२ १ २ ३ ४ ५ २ १र २१र२ ३ ४ ५
वो३जनि । तापृथिव्याः । जनिताग्नाइ । जनितासूरियस्या ।
४ ५ ४ ५ १ र १
जनद्वाउ । ३ । जनदाउ । ३ । जनत् । द्योयि । ३ । जनि-
१ र २ १ २ २ ४
तेन्द्रा । स्याउजनि । ता३४३ । ता३वापृथिष्णो६५६ः

॥ ८ ॥ ६१

प्रतर्दनऋषिः* । "सोमः" अभिषूयमाणः "पवते" पात्रेषु क्षरति । कीदृशः ? "मतीनां" बुद्धीनां । यद्वा । मननीयानां स्तुतीनां "जनिता" जनयिता† [ "जनिता मन्त्रे" (६,४,५३) इति निपातेन णि-लोपः ] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता । तथा "पृथिव्याः जनिता" । "अग्नेः" "जनिता"

* "दैवोदासिः" इति वि० ।

† अथेदं विवरणम्—'सोमः पवते'। विनियोगोऽस्य चतुर्थेऽहनि। अभिषूयमाणः पर्वसोमस्य पृथिव्यादीनां। जनयितृत्वं न सम्भवति। यज्ञद्वारेण स्थितिहेतुत्वात् जनयतीति जनिता मतीनां जनयिता दिवः जनयिताग्नेर्जनयिता सूर्यस्य जनयिता। इन्द्रस्य जनयिता। उत अपि विष्णोर्यामिमतइति। जनयिता पृथिव्यादिभ्यः रक्षेण वर्द्धयिता। अधिदैवतेनेन्द्रः सोमः यदाप्नोति तदायमर्थः। सर्वमिदं जनयति। आत्मा सोमः पवते साधयति भोक्तृत्वात्। आत्मा सत्कार्य वा। प्रधानभूतेन्द्रियाणां जनयिता पृथिव्यादीनाञ्च इत्योर्वर्णनात्मन्त्रिचाणापि अग्न्यादीनाञ्च आत्मानां तिसृणां विष्णोश्चाग्निमतः ॥"

अथ षष्ठी।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अभित्रिपृष्ठंवृषणंवयोधामङ्गोषिणमवावशन्तवाणीः।
३ १ २ ३ १ २ ३ २ ३ ३ १ २ ३ १ २ ३ १ २
वनावसानोवरुणोनसिन्धुर्विरत्नधादयतेवार्याणि॥६॥६२॥*

२ १ ५ १ २ २
(अङ्गिरसां व्रतीपोद्वः॥) ओ३हायि। ओ३हा। ओहा।
१ ५ १ २ १ २ १ २१
हूया२। ओ३हा३ए। अभित्रिपा। ष्ठा३०वृष। णंव-
४ ५ २ १२ २ १२ २ ३ ४ ५
योधाम्। अङ्गोषिणाम्। अवाव। शन्तवाणीः।
२ १२ २ १ ० ३ ४ ५ २ १ १ २
वनावसा। नो३वरुणोनसिन्धूः। ओ३हायि। ओ३-
५२ २ १ ५२ २ २ १
हा। ओहा। हूया२१ ओ३हा३ए। विरत्नधाः।
२ १ २ २ २ ४ ५
दयते। वा३४३। यो३यापुणाई५इयि॥ १०॥ ६२

प्रकाशयिता। 'सूर्य्यस्य" सर्व्वप्रेरकस्यादित्यस्य "जनिता" "इन्द्रस्य" जनिता पानेन मदस्य जनयिता। "उत" अपि च। "विष्णोः" व्यापकस्य "जनिता" जनयिता¶। एतत्सर्वं सोमेऽभिषूयमाणे भवति सोमेन हि देवताप्याय्यन्तइति॥ ५॥ ६१

---

* "वाङ् वाणान्"-इति, † "सिन्धू न"-इति च } ऋ०।

‡ उ० ६, २, ११, १=ऋ० ७, ३, २६, १ = अथे ७, २, १७।

¶ अत्राह यास्कः—"सोमः पवते सोमः सूर्यः प्रसवनाज्जनिता मतीनां प्रकाश-कर्मणा मादित्यरश्मीनां दिवो द्योतनकर्मणा मादित्यरश्मीनां पृथिव्याः प्रथनकर्मणा

अथ सप्तमी ।

१ २　३१ २ ३ १र २र ३ १ २ ३ १र २र　१ २
अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य गोपाः* ।

वसिष्ठ ऋषिः† । "त्रिपृष्ठं" त्रीणि पृष्ठानि द्रोणकलशादिस्थानानि सवनानि वा यस्य स तथोक्तस्तम् । "वृषणं" वर्षकम् । "वयोधाम्" अन्नस्य दातारम्‡ । "अङ्गोषिणं" आघोषन्तं सोमं¶ "वाणीः" स्तोत्ररूपा वाचः "अवावशन्त" कामयन्ते शब्दायन्ते वा । "वना" वनानि उदकानि "वसानः" । आच्छादयन् "वरुणो न" वरुण इव§ "सिन्धूः" अपां स्यन्दयिता पर्यन्तप्रदेशानाच्छादयति तद्वत् । "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि|| "दयते" स्तोतृभ्यः प्रयच्छति ॥ ६० ॥ ६२

---

मादित्यरश्मीनां, सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनां, विष्णोर्व्याप्तिकर्मणा मादित्यरश्मी नामित्यधिदैवतम् । अथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः । अपिवा सर्वाभिर्विभूतिभिर्विभूतत आत्मेत्यात्मगति माचष्टे"—इति प० ९, ११ ।

* "भुवनस्य राजा"—इति ऋ० ।

† "मैत्रावरुणः"—इति ऋषि मै० ।

‡ "स्तुतः", "स्तुतं", "वयः"-इति त्रीण्यपि पदानि पाठभेदात् सप्तमैकादशस्कन्दे च यस्ते (२, ७) । 'वयोधा मन्नानां धातारं यशस्विनं वा'—इति वि० ।

¶ "आङ्गूषस्तोमआघोषः "एमाङ्गूषेण वयमिन्द्रवन्तः" अनेन स्तोमेन वयमिन्द्रवन्तः"—इत्यादि नि० ५, ११ ।

§ "वरुणः वृणोतीति सतः"—इत्यादि नि० १०, ३—४ ।

|| 'वार्याणि वरणीयानि धनानि'—इति वि० ।

१ १ २ १ १ २ १ १ १ २ १ १ २ ३ १ २ २ २ २ १ २ २
वृषापवित्रे अधिसानो अव्येबृहत्सोमोवावृधेस्वानो*-

२ २
अद्रिः॥७॥६३†

(सन्यावैयश्वम्॥)हो।होपि। अक्रांत्समुद्रःप्रथमेविधामान्।
होहोयि। जनयन्प्रजाभुवनस्यगोपाः। हो। होयि वृ
षापवित्रे अधिसाने१२अ। व्यायि। हो। हो। वृह
त्सोमेर२वावृधेस्वाने१अ। द्रा। औ३। होवाहाउवा
३। ए३। स्वानाअ। द्री२३४५ः॥११॥ ६३

पराशरऋषिः‡। "समुद्रः" अस्मादापः मन्द्रवन्ति स समुद्रः अपां वर्षकः। "गोपाः" यज्ञस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुवनस्य" उदकस्य¶ "विधर्म्मन्" विधारकेऽन्तरिक्षे "प्रजाः" "जनयन्" उत्पादयन्"अक्रान्"सर्व्वमतिक्रामति[क्रमते-र्लुङि, तिपि, इड़भावे हलो च ङतायां सिज्लोपे मकारस्य

* "स्वान"—इति ऋ०।

† ऋ० ६, ९, १, १=ऋ० ७, ४, १८, प= ऋषे १७, २, १;—१९, २, ५—८—९; ऋवेद, २, ५।

‡ "पराशरः"—इति ऋषि-श्रे०।

¶ "भुवनम्"-इति उदकनामसु पञ्चाशत्तमं नैघण्टुकम् (१,१२)।

(सामसामनि द्वे॥) कानी। क्रान्तो२क्रान्तो२। हरिराहज्य-
मा२३ना३ः। सायिदान्। वाना२वाना२। स्यजठरेपुना२३-
ना३ः। द्रभीः। याता२याता२ः। कृणुतेनिरिर्णिजा२३-
गा३म्। आताः। मातो२म्मातो२म्। जनयता२३स्वा२स्वा
२३४ओहावा। भो२३४५ः॥ १२॥

कनिक्रन्तिहा। होयि। हरिराहज्य। मा२३४ना।
हाहोयि। सीदन्वनस्यजठरेपुना२३नाः। हाहोयि। नृभि
र्यतःकृणुतेनिर्णिजा२३ङ्गाम्। हाहोयि। अतोमतायिम्
जनयता२३। स्वा२धा२३४औहोवा। भो२३४५ः॥१३॥६४

प्रस्कण्वऋषिः*। "सृज्यमानः" आ समन्ताद्विसृज्यमानोऽभिषूयमाणः† "हरिः" हरितवर्णः सोमः "कनिक्रन्ति" पुनः पुनः शब्दायते [क्रन्दतेर्यङ्लुकि, तिपि, इडभावे, "दाधर्तिदर्धर्ती त्यादिना‡ निपातनादभ्यासस्य निगागमः। अभ्यस्तस्वरः¶ ]

* "काण्वः"-इति ऋषि-मै०।

† 'सृज्यमानः संसृज्यमानः'-इति वि०।

‡ "दाधर्त्तिदर्धर्त्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च" —इति पा० ७, ४, ६५।

¶ "अभ्यस्तानामादिः"-इति पा० ६, १, १८९।

अथ नवमी ।

२ २उ १ १ १　　१ २ ३ १ ३ २ १ २ १ २ १ १
एषस्यतेमधुमाॅ२इन्द्रसोमोवृषावृष्णःपरिपवित्रेअक्षाः ।
२　१ २ ३ १ ३ १ २ १ २　३ २ ३ उ ३क २र
सहस्रदाःशतदाभूरिदावाशश्वत्तमम्बर्हिरावाज्यस्थात्॥८॥६५*

४ ५ ४ ५　२ २　४ ५ र　४र ५
(ऐषम् ॥) एषाएषाः । स्यता३१२३४यि । मधुमाॅ२इन्द्रसोमः ।
र　२ २　५ ४ ५र र
वृषावृषाई१ए । वृष्णो३१२३४ः । परिविच्चेअक्षाः । सहस्रदा
५ २ २　५ ४र ५　४र ५र　५
ई१ए । स्रदा३१२३४ः । शतदाभूरिदावा । शश्वत्त्स्वाई१दे ।
१ २　र५र ४ ५　५　५
तमा३१२३४म् । बर्हिरावाजिपे । स्थियाई१त्राउवा स्था२
१ १ १ १
२३४५त् ॥ १४ ॥ ६५

तथा "पुनानः" पूयमानः "वनस्य" वननीयस्य चास्य द्रोण-कलशस्य "जठरे" "सीदन्" उपविशन् शब्दायते । किञ्च "नृभिः" कर्मनेतृभिरृत्विग्भिः "यतः" संयतः सोमः "गाः" गो-विकारान् क्षीरादीन् आच्छादयन् "निर्णिजं" शुद्धम् आत्मनोरूपं† "कृणुते" ग्रहादिषु करोति । अतोऽस्मै सोमाय "मतिं" मननीयां स्तुतिं "स्वधाभिः" हविर्भिः सह "जनयत" स्तोतारोऽजनयन् [ अत्यान्मादिशाभावः छान्दसः । अदादेशः ] यद्वा हे स्तोतारः अस्मै सोमाय स्तुतिं जनयत उत्पादयत कुरुतेति यावत् ॥ ८ ॥ ६४

---

* ऋ० ७, १, ११, ४ ।

† "निर्णिक्"-इति रूपनामसु प्रथमं नैघण्टुकम् (,१, ७) ।

अथ दशमी।

१२ ३१२ ३२ ३१र २र३ २ ३२३ १ २
पवस्वसोममधुमाँऋतावापोवसानोअधिसानोअव्ये।
३ १ २ ३१२ ३ १ १ ३१२३
अवद्रोणानिघृतवन्ति*रोहमदिन्तमोमत्सरइन्द्र-
१ २
पानः॥ १०॥ ६६†

॥ इति चतुर्थ-दशति ॥ ४ ॥

उशनाऋषिः‡। हे इन्द्र! "वृष्णः" वर्षकस्य "ते" तुभ्यं [चतुर्थ्यर्थे षष्ठी¶] "एषः" "स्यः§" स सोमः "मधुमान्" माधुर्योपेतः "वृषा" वर्षकः "पवित्रे" "पर्यक्षाः" पर्यस्रवत् [क्षरतेर्लुङि रूपम्] स एव "सहस्रदाः" सहस्रसङ्ख्याकस्य धनस्य दाता „शतदाः" शतसङ्ख्याकस्य दाता "भूरिदावा"‖ ततोऽपि भूरेर्दाता 'वाजी' बलवान् सोमः "शश्वत्तमम्" अतिशयेन पुराणं "बर्हिः" यज्ञम् "अस्थात्" अधितिष्ठति॥

"वृषा वृष्णः"-"वृषा वृष्ण"—इति, "सहस्रसाः"-"शतसाः" इति च सामऋचः पाठाः॥ ८॥६५

---

* "घृतवान्ति"—इति ऋ०।

† ऋ० ७, ४, ८, २।

‡ "काव्यः"—इति ऋषि-जे०।

¶ "षष्ठ्यर्थे चतुर्थीति वाच्यम् ( २, ३, ६२ )"—इति कात्यायनवचनादित्यर्थः।

§ "छन्दस्यपि बहुलम् (पा० ६, १, १२२)"--इतीव लभ्ये स इत्यस्य लोपः।

‖ "आतोमनिन्क्वनिब्वनिपश्च ( पा० ३, २, ७४ )"—इति वनिपि रूपम्।

१ २ ३ ४ १ २
( माधुच्छन्दसम् ॥ ) हाओ२३४वाइ। इहा३१।
११ २ १ २ १ ३ ४ ५ १ १ र
पवस्वसो। मा३मधु। मा२ऋतावा। अपोवसा।
२ १ १ १ र ३ ५ ११ र २ १
नो३अधि। सानोअव्याइ। अवद्रोणा। नी३घृत।
१ १ ४ २ १ ३ ५ १ २ २ १
वन्तिरोहा। हाओ२३४वाइ। इहा३१। मदिन्तमो।
२ १ २ २ ४
मत्सरः। आ३४३इ। द्रा३पा५नाई५ई: ॥ १५ ॥ ६६

प्रतर्दनऋषिः*। हे "सोम!" "मधुमान्" [ मत्वर्थीयः ] तादृशस्त्वं "अपः" वसतीवरीः एकधनाः "वसानः" आच्छादयन् "अधि" अधिकं "सानो" समुच्छ्रिते "अव्ये" अविभवे-पवित्रे "पवस्व" क्षर। ततः "मदिन्तमः" अतिशयेन मदकरः "इन्द्रपानः" इन्द्रेण पातव्यः "मत्सरः" मादयिता सोमः "घृतवन्ति" उदकवतः† "द्रोणानि" द्रोणकलशान् "अवरोह" प्रादुर्भवसि ॥

"रोह"-"सीद"—इति पाठौ। १० ॥ ६६

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

* "दिवोदासिः"—इति ऋषि-सं०।

† "घृतम्"—इत्युदकनामसु दशमं नैघण्टुकम (१, १२)।

अथ सप्तमे खण्डे--

सैषा प्रथमा।

१ २ ३ २र ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रसेनानीः शूरो अग्रेरथानाङ्गव्यन्नेति हर्षते अस्य सेना।
३ २ ३ १ २ ३ १ २र ३र ३ २उ ३ १ २ ३ १ २
भद्रान्कृण्वन्निन्द्रहवान्त्सखिभ्य आसोमो वस्त्रारभसानि-

दत्ते॥ १॥ ६७*

३ ५ ३ ५
(कुत्सस्याधिरथीयानि त्रीणि॥) हो४वा। उक्कुवा
४ ५ २ १र २र १ र र २ २ ३ ४
३। होवा। प्रसेनानाइः। शूरोआ३। अाइरथा
५ २ १ २र १ २ २ ३ ४ ५ २ १र
नाम्। गव्यन्नेताइ। हर्षताइइ। अस्यसेना। भद्रा
१ १ २ २ ३ ४ ५ २र १र २र १
न्कृण्वान्। इन्द्रहा३। वान्त्सखिभ्याः। आसोमोवा।
२ १ २र ३ ४ ५ २ ५ २ २ ४
स्त्रा३रभ। सानिदत्ताइ। हो४वा। उक्कुवा३। हो
५ ५
वा६। हाउवा॥ १६॥

५र ४ ३ १११ २ १र २र १ र र २ २
औहो३वा३४५। प्रसेनानाइः। शूरोआ३। आइ
३४ ५ २ १ २र १ २ १ ३ ४ ५
रथानाम्। गव्यन्नेताइ। हर्षताइइ। अस्यसेना।
२ १र २ १ २ २ ३ ४ ५ र ४
भद्रान्कृण्वान्। इन्द्रहा३। वान्त्सखिभ्याः। औहो३

* ऋ० ७, ४, ६, १।

२ १११    २र १र २र १    २ १    २    २
वा३४५ । आसोमोवा । ख्ला३रभ । सा३४३ । नी३
४
दा५न्ता६५६इ ॥ १७ ॥

५र४ २ १११ १ र२र १ ०र र २ २
औहोऽवा३४५ । प्रसेनानाइः । शूरोभा३ । ग्रा३
३ ४ ५    ३ २र १    २    २ ३ ४ ५
रथानाम् । गव्यन्नेताइ । हर्षता३इ । अस्यसेना ।
३ र २ १    २    २ ३ ४ ५    र ४ २
भद्रान्कृण्वान् । इन्द्रहा३ । वांसखिभ्याः । औहोऽवा
१११    ३र र २र १    २ १    २    २ ४
३४५ । आसोमोवा । ख्ला३रभ । सा३४३ । नी३दा५ ।
१ १११
ता२३४५इ ॥ १८ ॥ ६७

प्रतर्दनऋषिः* । "सेनानीः" सेनाना मग्रे नेता । "शूरः" शत्रूणां बाधकः "सोमः" "गव्यन्"† इच्छन् यजमानानां पश्वादिक मृच्छन् "रथानाम्" "अग्रे" पुरतः "प्रेति" प्रकर्षेण गच्छागच्छति । "अस्य" सोमस्य "सेना" च "हर्षते" हृष्यति [वाक्यभेदादनिघातः] किञ्च "सखिभ्यः" समानख्यानेभ्यो यजमानेभ्यः "इन्द्रहवान्" तैः क्रतानि इन्द्रस्य आह्वानानि "भद्रान्" कल्याणानि यथार्थानि "कृण्वन्" । आहूतो हीन्द्रः सोमं पीत्वा

* "दैवोदासि"—इति ऋषि-नै० ।

† "छन्दसि परेच्छाया मपि क्यच् वक्तव्यः"—इति तृतीयाध्यायीय-कात्यायन-वचनादिह क्यचि रूपम् ।

अथ द्वितीया।

२ ३ १ २ ३ १ २ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
२ प्रते धारा मधुमतीरसृग्रन्वारं यत्पूतो अत्येष्यव्यम्।
१ २ ३ १ २ ३ १ २ १ १ २ ३ १ २ ३ १ २ ३ २
पवमान पवसे धाम गोनां जनयंत्सूर्यमपिन्वो अर्कैः ॥२॥९८*

(वैयश्वज्योतिषाणि त्रीणि ॥) हाउहोवा३हाइ।

प्रते धारा मधुमा३ताइ रसृग्रा२३४णू। हाउहोवा३हाइ।

वारं यत्पूतो अतौ३याइ षिअव्या२३४उम्। हाउहोवा३

हाइ। पवमान पवसे३धाम गोना२३४ऊम्। हाउहोवा

कामान् प्रयच्छतीति। "रभसानि" इन्द्रस्य वेगेनागमननिमित्तानि "वस्त्रा" वस्त्राण्याच्छादकानि पयःप्रभृतीन्याश्रयणानि "आ दत्ते" आ गृह्णाति † ॥ १ ॥ ९७

* ऋ० ७, ४, १०, १।

† अत्र विवरणं यथा—"प्रसेनानी। सेनां नयति इति सेनानीः। शूरः विक्रान्तः। अग्रे रथानां ये देवरथाः गच्छन् इच्छन्। धनं पृथिव्यां गवं प्रेति प्रयाति। हर्षन्ति अस्य सेना भद्रान् अभ्यवीयाणि। कुर्वन् अयन्। रथन्वान् रश्मियाणि। सखिभ्यः ऋत्विग्भ्यः। एवं गुणविशिष्टः। सोमः वस्त्राणि रभसानि यतन्ति। आदत्ते परदेवेभ्यः। अथवा सेनानीः इन्द्रः शूरः विक्रान्तः। अग्रे पुरतः देवरथानां गच्छन्। पृथिव्यां भवन्तम्। रातिं गृह्णाति ददाति सैन्येभ्यः सोमस्य रश्मीन् वस्त्राणि सैन्येभ्यो ददाति॥"—इति॥

अथ तृतीया ।

१ २   ३क २र   ३ १र   २र   ३ १र २र
प्र गायताभ्यर्चाम देवान्त्सोमं हिनोत महते धनाय ।
३ १ २ ३ २ ३ २ ३ २ ३ १ २   ३ १ २ ३ १ २र
स्वादुः पवतामति वारमव्यमासीदतु कलशं देव इन्दुः ॥ ३ ॥ ६८*

२   र   १   ७र   १ १ १ १   २र
इहाइ । जनयंत्सूर्यमा३पाइन्वो अर्का३३४५इः । हाउ
र   २   १ १ १ १
ओवा३हाउ । वा३४५ ॥ १८ ॥ ६८

पराशरऋषिः† । तदा प्रसूज्यसे "यद्" यदा "पूतः" वसतीवरीभिस्त्वं "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि" अतीत्य गच्छसि । किञ्च हे "पवमान" शोध्यमान सोम! "गोनाम्‡" गवां¶ "धाम" धीयते पीयत इति धाम पयः तत् वसनीकृत्य "पवसे" चरसि । ततः "जनयन्" आयमानस्त्वं "अर्कः" अर्चनीयैः स्व-तेजोभिः "सूर्यम्" आदित्यम् "अपिन्वः" पूरयसि ॥

"वारं यत्पूतो अत्येष्यव्यम्"—"वाराण्यपूतो अत्येष्यव्यान्"—इति, "जनयन्"-"जनयन्"—इति च सामऋचः पाठो ॥ २ ॥ ६८

* ऋ० ७, ४, ११, ४ ।

† "शाक्तः"—इति ऋषि-ग० ।

‡ "गोः पादान्ते (७, १, ५७)"—इति गिरः गोनामिति ।

¶ 'गवां एनीनां महतां वा'—इति वि० ।

२ १र २ १ १ २ ३ ४ ५ २र १
प्रगायता। अभिय। चामदेवान्। सोमᳩ-
२ १ २ ३ ४ ५ १र १ २
हिनो। ता३मह। तेधनाया। स्वादुःपवा। ता३
१ २ ३ ४ ५ २र १र २ १ २
मति। वारमव्याम्। आसीदतु। कलशम्। दा-
२ ४
३४३इ। वा३आ५इन्दू६५६ः॥ २० ॥ ६९

इन्द्रप्रमतिर्वासिष्ठऋषिः। हे स्तोतारः! "प्रगायत" 'सोमं' प्रकर्षेणाभिष्टुत। वयन्तु "देवान्" "अभ्यर्चामः" अभिष्टुमः*। यद्वा। देवानभ्यर्चामोऽभ्यर्चत [पुरुष-व्यत्ययः]। किञ्च। "महते" महत् प्रभुतं धनाय धनं प्राप्तुं सोमं "हिनोत"† अभिषवार्थं प्रेरयत [क्रियार्थोपपदस्य च कर्मणि स्थानिनः (२,३,१४,)-इति धन-शब्दस्य चतुर्थी] ततः "स्वादुः" मधुरः सोमः "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अतिपवताम्" अतीत्य चरतु। "देवः" द्योतमानः। सोमः "इन्दुः" दीप्तः सन् "कलशं" द्रोणम् "अति आसीदतु" आभिमुख्येन तिष्ठतु॥

"पवतां"-"पवाते"—इति, "देवइन्दुः"-"देवयुर्न"—इति साम्नऋचः पाठौ॥ २॥ ६९

---

* 'सोमरक्षैव'—इति वि०।

† "मनमप्तनबनाच (७, १, ४५ पा०)"—इति तपि विद्ध हिनोतेति।

अथ चतुर्थी ।

१ २ ३ १ २ ३ १र २र३ २ ३ १र २र ३ १ २
प्रहिन्वानोजनितारोदस्योरथोनवाजꣳसनिषन्नयासीत् ।
३ १ २ १ २ ३ १ २ ३ २ ३ १ २ १ २ ३ १
इन्द्रङ्गच्छन्नायुधासꣳशिशानोविश्वावसुहस्तयोराद-
२
धानः ॥ ४ ॥७०*

२र र २ र र र १ २र ५र
हाउहोवा३हाइ । प्रहिन्वानोजनितारो३४३दसीयोः ।
२र र २ र र १ २र ४र
हाउहोवा३हाइ । रथोनवाजꣳमनिषा३४३नयासीत् ।
२र र २ र र २ १र ५
हाउहोवा३हाइ । इन्द्रङ्गच्छन्नायुधासा३४३ꣳशिशानः ।
२र र २ र र १ २र ५ ४
हाउहोवा३हाइ । विश्वावसुहस्तयोरा३४३दधानः । इधा

पुनाउ । वा ॥ २१ ॥ ७०

वसिष्ठऋषिः† । "प्रहिन्वानः" अध्वर्युभिः प्रेर्यमाणः‡ "जनिता"¶ उत्पादयिता "रोदस्योः" द्यावापृथिव्योः§ तयोर्जनयितृत्वं वृष्टिप्रदान-हविः-प्रापणाभ्याम् । तादृक सोमो "वाजम्" अन्नं "सनिष्यन्" दास्यन्‖ "प्रायासीत्" प्रगच्छति ।

* ऋ० ७, ३, २९, १ ।　　† "मित्रावरुणः"--इति ऋषि-नै० ।

‡ 'प्रीयमाणः अश्वम् वा'—इति वि० ।

¶ "जनिता मन्त्रे ( ६,४,५३ )"—इति पा० ।

§ "रोदसी"—इति द्यावापृथिव्यौ नामसु चतुर्थं मंधण्टकम ( ३, ३० )।

‖ 'सनिष्यन् सम्भजमानः'—इति वि० ।

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ र २ र ३ १ २ ३ १ र २ र

तव त्यदीमनसोविनतोवागज्येष्ठस्यधर्मन्द्युक्षोरनीके।

१ २ ३ १ ३ १ २ ३ २ उ ३ १ २ ३ २ ३ २ ३ १ २

आदीमायन्वरमावावशानाजुष्टम्पतिङ्कलशेगावइन्दुम्॥७१

२ ४ ५र २ १ १ १ १ २ ४

(वाच:सामनी द्वे)॥ तवत्यदी। द्योर२३४५इ। मन-

र २र ४ ५ २ १ १ १ १ २र ४ ५ ३ १ १ १ १

सोविनतः। वार२३४५क्। ज्येष्ठस्यधा। र्मा२३४५।

४ २र ४ ५र २ १ १ ११ २र ४र ५र ३ १ १ १ १

मन्द्युक्षोरनी। का२३४५इ। आदीमायन्। द्यो२३४५इ।

३ ४ २र ४र ५ र २ १ १ १ १ ३ ४ ५ ३ १ १ १ १

वरमावावशा। ना२३४५ः। जुष्टम्पतिम्। द्यो२३३५इ।

४ र

कलशेगा५वः। इ। दाउ। वा॥ २२॥

२ १ २ ३ ४ र ३र ४ ५ २ १ १ १ १

तवत्यदा३१२३४इ। मनसोविनतः। वा२३४५क्।

२र १ २ २र ४ ५र २ १ १ १ १ २र १

ज्येष्ठस्यधा३१२३४। मन्द्युक्षोरनी। का२३४५इ। आदा-

"इन्द्रकृष्टम्" प्राप्नुवन् "आयुधा" "आयुधानि" "संशिशानः" सम्यक् तीक्ष्णीकुर्व्वन् इन्द्रं सहायगमनार्थं तीक्ष्णायुधः सन् "विश्वा"† सर्व्वाणि "वसु"‡ वसूनि धनानि "हस्तयोरादधानः" अस्मभ्यन्दानाय एवं कुर्व्वन् प्रायासीत्॥ ४॥ ७०

---

* ऋ० ७, ४, ११, १।

†,‡ 'विश्वा'—इति शुप आले, 'वसु'—इति सुपो लुकि च रूपम् (७, १, ३९)।

२ ३४ २र ४र५ र ३ ११११ २१
इमायाइ१२३४न् । वरमावावशा । नार३४५ुः । जुष्ट-
२ र
मिताइ१२३४इम् । कलशेगाप५वः । इ । दाउ । वा ।
॥ २३ ॥ ७१

मृडीको वासिष्ठऋषिः । "वेनतः" [ वेनो वेनतेः कान्ति-कर्म्मणः ( १०,४,३८ )"—इति यास्कः ] कामयमानस्य "मनसः" [ मनो मन्यतेः स्तुतिकर्म्मणः*] स्तोतुः "वाक्" स्तुतिलक्षणा† यद्येनं "तक्षत्" संस्करोति‡ । "धर्म्मन्" धारके¶ यज्ञे "ज्येष्ठस्य" प्रशस्यस्य "वृक्षोः" दीप्त-स्तुतिकस्य [ टुक्षु शब्दे(भ्वा०प०)इत्यस्मात् कु-प्रत्ययः ] सवनस्य "अनीके" प्रमुखे यदा यज्ञेषु सवन-मुखे स्तोतुर्वाक् सोमं स्तौतीत्यर्थः । "आ" अनन्तरमेव "वरं" वरणीयं "जुष्टं" देवानां मदाय पर्य्याप्तं "पतिं" सर्वस्य पालकं "कलशे" स्थितं "इन्दुम्" "ईम्" एनं सोमं "वावशानाः" कामयमानाः "गावः" "आयन्" पयसा क्षीरेण मिश्रयितुं मागच्छन्ति ॥

"धर्म्मन्"-"धर्म्मणि"—इति पाठौ ॥ ५ ॥ ७१

---

* "मन्यते"—इति स्तुति-कर्मसु चतुर्विंशतौ पठितम् ( ३, १४ ) ।

† 'वाक् स्तवितव्यम्'—इति वि० ।

‡ 'सञ्चत् करोति'—इत्येव वि० ।

¶ धारणार्थ-धृ-धातोः कर्त्तरि मनिनि धर्म्मन्निति, तस्मात् सप्तम्या लुकि रूपम् ।

अथ षष्ठी।

२ ११ ३१२ ३२३१२ ३२३ १२
साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः।
३११ ३१२ ३२३१२ ३१३२३ १
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी॥ ६॥७२*

(दाशस्पत्ये द्वे॥) साकाम्। उक्षोमर्जयन्त। स्वसा२३राः। दाशा२। धीरस्यधीनयोधनू२३त्रीः। हारी२ः। पर्यद्रवज्जाःसूरिया२३स्या। द्रोणा२म्। ननक्षे अत्योनवा२३। हाउवा३। जी२३४५॥ २४॥

साकमुक्षा६ए। ए३१२३४। मर्ज्जयन्तस्वसारः। दशधीरा६ए। ए३१२३४। स्यधीतयोधनुत्रीः। हरिः पर्या६ए। ए३१२३४। द्रवज्जाःसूर्यस्य। द्रोणन्नना६ए। ए३१२३४। क्षेअत्योनवाई। हाउवा। जी२३४५॥२५॥ ७२

---

* उ० ६,२,१४,१ = ऋ० ७,४,३,१ = ऋग्वे ८,१,७ - १२,१,८ - १८,२,४।

अथ सप्तमी ।

३ १ २　३　१ २　३ २　३　१ २　३　२ ३　२　३ १ र　२ र
अधियदस्मिन्वाजिनीवशुभस्पर्द्धन्तेधियःसूरेनविशः ।
२ १ २ ७　१ २　३ १ २　२ १ र　२ र ९ १ ७　३ १ १
अपोवृणानःपवतेकवीयान्व्रजन्नपशुवर्द्धनायमन्म ॥ ७ ॥७३*

नोधाऋषिः†। "साकमुक्षः" [ उक्ष सेचने ( भ्वा०प० ) क्विपि रूपम् ] ताद्दक्षः "स्वसारः" कर्म्म-करणार्थ मितस्ततः सुष्ठु गच्छन्त्यः; अङ्गुलयः¶ "मर्जयन्त" सोमं शोधयन्ति [ मृजू शौचालङ्कारयोः ( चु०उभ० ] ताः दशसङ्ख्याकाः "धीतयः" [ अङ्गुलिनामैतत् ( नै०२,५.१ ] अङ्गुलयः "धीरस्य" समर्थस्य प्राज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति§। ततः "हरिः" हरितवर्णः सोमः "सूर्य्यस्य" "जाः" प्रादुर्भूता जाया दिशस्ताः॥ "पर्य्यद्रवत्" परितो गच्छति। सूर्य्यस्य तेजसा हि आविर्भवतीति दिशां तस्य जायात्वम्। "अत्यः" अतनशीलः "वाजो न" अश्व इव स्थितः सोमः "द्रोण" कलशं "ननक्ष" व्याप्नोति [नक्षति-व्याप्ति-कर्मा (नै०२,१८,२) ॥ ६ ॥ ७२

* ऋ०७,४,४,१ ।

† "गौतमः" -इति ऋषि सं० ।

‡ स्व शब्दोपपतापर्थाः ( भ्वा० प० )- इत्यस्य रूपं स्वसेत्यभिप्राय. ।

¶ "स्वसारः"—इत्यङ्गुलि नामसु वयोदशसम संपद्यकम ।

§ "यापन्ति"—इति वि० ।

॥ "अपत्यम्"—इति वि० । "जाः"—इत्यपत्यनामसु सप्तम संपद्यकम् २,२ ।

४ ५ ४ ३ ३२ १
( काश्यपस्य च शोभनम्॥ ) अधियदा। स्माइन्वारजि

३२ १ १ २ १ २ १ ३ ४ ५
नीरवशु। भाः। स्पर्द्धन्तेधियःसू। राइनविशाः।

१ १२ २ ७ २ १
अपोवृणानःपवताइ। कवी२३यान्। व्रजन्न। पा।

२ १ २ २ ४
शुवद्धं। ना३४३। या३मा५म्माई५६॥ २६ ॥ ७३

कण्वऋषिः*। "यद्" यदा "अस्मिन्" सोमे "वाजिनीव शुभः"† अश्वे यथा वस्त्रप्रभृत्यलङ्कारा भवन्ति। यदा वास्मिन् सोमे "सूरे न" सूर्य्ये न यथा सूर्य्ये "विशः" रश्मयः उदिता भवन्ति तदा "धियः" अङ्गुलयः "अधिस्पर्द्धन्ते" अहं पुरस्ताच्छोधयाम्यहं पुरतः शोधयामीत्यहमिकया उपतिष्ठते। ततोऽयं सोमः "अपः" वसतीवरीः "वृणानः" आच्छादयन् "पवते" पात्रेषु चरति कलशानभिगच्छति। कीदृशः? "कवीयान्" कविरिवाचरन्। यद्वा। कवयः स्तोतारः तानिच्छन्। तत्र दृष्टान्तः—"व्रजं न" "मन्म" मननीयं बोद्धव्यं रक्षितव्यं गवां गोष्ठं पशुवर्द्धनाय गोपालः परिगच्छति यथा तथा देवानां प्रीणनाय पात्राणि पवते॥

"सूर्य्ये"-"सूरे"—इति, "कवीयान्"—"कवीयन्"—इति च साम्न ऋचः पाठः॥ ७॥ ७३

---

* "घोरः"—इति ऋषि० मे०।

† शुभरति शुभ शोभायाम् (भ्वा०प्रा०)—इत्यस्य रूपम्, विभक्तेस्तु न दृश्यते मूले।

अथाष्टमी।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इन्दुर्वाजीपवतेगोन्योघाइन्द्रेसोमःसहइन्वन्मदाय।
३ १ २ ३ १ ३ १ २ ३ १ २ ३ २
हन्तिरक्षोबाधतेपर्य्यरातिं,
१ २ ३ १ २ ३ १ २ ३ १ २
व*रिवस्कृ†एवन्वृजनस्यराजा ॥ ८ ॥ ७४‡

( दाशस्पत्यानि चत्वारि ॥ ) इन्दू३र्वाजो २। पवतेगो-
नियोघाः। इन्द्राइसो२३४माः। साहइन्वन्मदाया।
हन्ताइरा२३४क्षाः। बाधतेपर्यरातिम्। वराइवा२३४स्कृ।
एवन्वृजाना२३स्या। रा३औवाओ२३४वा। हो५इ।
डा ॥ २७ ॥

इन्दुर्वाजीपवतौ। हौहोवाहाइ। गोनियौघौ।
वाओ२३४वा। इन्द्र२सोमा२ःसहइ। न्वान्मदायौ। वा-
ओ२३४वा। हन्तिरक्षोबाधते। पार्यरातौ। वाओ-

* "वरातीर्व"—इति,　　† "वरिवःकृत्"—इति च क्व०।
‡ उ० १,२,१०,१ = ऋ० ७,४,१२,५ = अथ ३,१,१५—८,२,५।

२३४वा। वरिवस्कृण्वन्व् जना३। स्वा। रा३जौवा-

यो२३४वा। ह्वो५इ। डा॥ २८॥

इन्दुरौहोवाहाइयावाजाउ। वा३। हाउवा।

पवतेगोनियोघाउ। वा३। हाउवा। इन्द्राइसोमः।

सहइन्वाउ। वा३। हाउवा३। मा२दा२३४औहोवा।

या२४५। इन्ताइरक्षो॰। बाधानाइपाउ। वा३।

हाउवा३। या२रा२३४औहोवा। ती२३४५म्। वरा-

इवस्कृ। ण्वन्वृजनाउ। वा३। हाउवा३। स्वा२-

रा२३४औहोवा। जा२३४५॥ २८॥

इन्दुर्वाजीपवतेगोनियोघाः। इन्द्रे सोमःसहइन्वन्म-

दाया। हन्तिरक्षोबाधतेपर्यरातीम्। वरिवस्कृण्वन्वृज-

४ ५　　२र १　　५र र　　१　　१ १र १ १ १ १ १
नस्यराजा । राजा३४औहोवा । ए३ । स्यराजा२३४५

॥ २० ॥ ७४

॥ इति ग्रामे गेये पञ्चदशः प्रपाठकः ॥

मन्युर्वासिष्ठ ऋषिः । "इन्दुः" क्षरणशीलः* "वाजी" बलवान् "गोन्योघाः" गमनशील-नीचीनाग्र-रससङ्घातः† "इन्द्रे" "सहः" बलकरं रसम् "इन्वन्" प्रेरयन्‡ "सोमः" "मदाय" तस्य मदार्थं "पवते" क्षरति । किञ्च । "रक्षः" रक्षःकुलं "हन्ति" हिनस्ति । किञ्च । "अरातीः" अरातीन्¶ शत्रून् "परिबाधते" परितः संहरति । कीदृशः ? "वरिवः" वरणीयं धनं "कृण्वन्" स्तोतॄणां कुर्वन् "वृजनस्य" बलस्य§ "राजा" ईश्वरः|| सोम इति ॥ ८ ॥ ७४

---

* अतएव "इन्दुः"—इति उदकनामसु दृश्यते च (मं०१,१२,=२) "उन्देरिच्चादेः—(उ,१)"—इत्युणादिसूत्रेण इन्दुरिति ।

† गो—गमनशीलः, नी—नीचिनः, (नस्य अग्रं विद्यमानः,) ओघः—रससङ्घातः। "गोनी"-शब्दो गमनशीलार्थेऽपभ्रंश इत्युदाजहार च पश्चात् पण्डितः ।

‡ "इन्वति"—इति गतिकर्मसु पञ्चदशाधिकशतं नैघण्टुकम् २,१४ ।

¶ भाष्यकारस्तत्र ऋग्वेदीयपाठमनुसृत्य व्याचख्यौ, सामवेदीयपाठस्तु "अरातिम्"—इति ।

§ "वृजनम्"—इति बलनामसु एकविंशतितमं नैघण्टुकम् २,९ ।

|| "राजति"—इति ऐश्वर्यकर्मसु चतुर्थं नैघण्टुकम् २,२१ ।

अथ नवमी।

१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अयापवापवस्वैनावसूनिमाꣳश्चत्वइन्दोसरसिप्रधन्व।

३ २ ३ १ २ ३ २३ १ २ १
ब्रध्नश्चिद्यस्यवातोनजूति

१ ३१ २ ३ १ २ ३ १ २
म्पुरुमेधाश्चि*त्तकवेनरन्धात्॥ ९॥ ७५†

५र ४ ५ ४ ५
(औष्ठानि त्रीणि॥) औहोवाइ। अयोवाइ।

१र २र २ १ २ ५ १ २ २ ५ १
पवापवस्वैनावसू२३नी। औ३होइ। इहा। ई३या।

२ १ २ २ १ २ ५ २ २ २
माꣳश्चत्वइन्दोसरसिप्रधा२३न्वा। औ२होइ। इहा।

५ १ १ २ २ २१ २ ५ १ २ २
ई३या। ब्रध्नश्चिद्यंस्यवातोनजू२३तीम्। औ३होइ। इहा।

५ १ १२ २ २ २ १ १ ५ १
ई३या। पुरुमेधाश्चित्तकवेनरा२३न्धात्। औ३होइ।

२ २ ५ २ ५२ २ २ १२ ३ १
इहा। ई२। या२३४। औहोवा। ए३। होदिहो१॥

॥ १॥

५ ४ ५ ४ ५ १ २ २२ १ १ २
अयोवाइ। पवोवाइ। पवस्वैनावसू२३नी। इहो

* "पुरुमेधश्चि"—इति क०।

† उ० ४, १, ११, १ = ऋ० ९, ७, ११, २ = अवे ३, २, १७—८, २, १०—१३, २, १।

५ २ र १ र २ १ १
इया३ । ई३या । मा॒ऽऽस्वल्वइन्दो सरसिप्रधा२३न्वा । इ

र ५ २ १ र र २ १ १
होइया३ । ई३या । अश्वश्चिद्यस्यवातोनजू२३तीम् ।

र ५ १ १ र र १ १ १
इहोइया३ । ई३या । पुरुमेधाश्चित्तकवेनरा२३न्धात् ।

र १ २ ५ र र २ २ र
इहोइया३ । ई२ । या२३४ । औहोवा । ए३ । दी

१ १ १ १ १
दया२३४५त् ॥ २ ॥

१ २ ५ २ १ ५ २ १ र
। हा औ२३४वा । २ । हा३औ२३४वा । हाउवा । अया-

२ १ र २ र १ र २ र १ २ १ १ १ १ २
पवापवस्वैनावसूनि । इहइ । हिया२ । इहा । इहा ।

र १ २ र १ २ १ २ १ २ १ १ २
मा॒ऽऽस्वल्वइन्दोसरसिप्रधन्व । इहइ । हिया२ । इहा ।

१ २ १ २ १ २ १ र २ र १ २ र १ २ १
इहा । अश्वश्चिद्यस्यवातोनजूनिम् । इहइ । हिया२ ।

१ २ १ २ २ ३ ५ २ १ ५
इहा । इहा३ । हाऔ२३४वा । २ । हा३औ२३४वा ।

२ १ र १ र १ २ र १ २ र १ २ १
हाउवा । पुरुमेधाश्चित्तकवेनरन्धात् । इहइ । हिया

१ २ १ २ १ १ १ १
२ । इहा । इहा२३४५ ॥ ३ ॥ ७५

कुत्सऋषिः* । हे सोम ! "अया" अनया "पवा" पवमानया धारया सह "एना" एनानि "वसूनि" धनानि "पवस्व" चर [पवा—पूञ् पवने (क्र्या० उ०) "अन्येभ्योपि दृश्यन्ते (३,२,१०१)"—इति विन् प्रत्ययः । आर्धधातुकलक्षणो गुणः । "सावेकाचः (६,१,१६८)"—इति तृतीयाया उदात्तत्वम्] । तथा हे "इन्द्र"! त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके† वसतीवर्थाख्ये कलशे "प्रधन्व" प्रगच्छ‡ । ततः "यस्य" यं "ब्रध्नश्चित्" सर्वेषां प्रज्ञापकः मूलभूतो वा आदित्यः¶ "वातो न" वात इव "जूतिं" वेगं§ कुर्वन् । किञ्च । "पुरुमेधाश्चित्" बहुविधप्रज्ञ इन्द्रश्च "तकवे" [ तकतिर्गतिकर्म्मसु पठितः‖ । अस्मादौणादिक उन् प्रत्ययः येस्येति (२,३,२७) कर्मणि षष्ठी ॥ "न लोकाव्ययेति ( २, ३, ६८ ) षष्ठी-प्रतिषेधश्छान्दसः] सोम मभि गच्छता मित्यर्थः ॥

"यस्य"-"यच"—इति, "जूतिं"—"जूनः"-इति,—"नरश्वात्"-"नरन्दात्"—इति च साम्न ऋचः क्रमेण पाठाः ॥ ८ ॥ ७५

* "आङ्गिरसः"—इति ऋषि-मै० ।

† "सरः"—इत्युदकनामसु पठितं गत्यदम् मै०१,१२ ।

‡ "धन्वति"—इति गतिकर्मसु चतुःषष्ठितमं पदं पठितम् २,१४ ।

¶ 'ब्रध्नः महत्, सविता वा महान् वा'—इति वि० ।

§ जवतेर्वेगकर्मण ऊतियूतिजूतीत्यादिना (३,३,९७) निपातनात् जूतिरिति ।

‖ नि० नै० २,१४,६८ ।

अथ दशमी।

३ १र　२र　३ १ २ ३ ३ १र　२र　३ १
महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान्।
१ २ ३ २ ३ १ २　३ १र
अदधादिन्द्रे पवमान ओजो
२र ३ २ ३ २　३ १ २
ऽजनयत्सूर्ये ज्योतिरिन्दुः॥ १०॥ ७६*

२　र र　१　र
(आत्रम्॥) महत्तत्सोमो महिषश्चा३कारा२। अपां
र र १　र र र १
यद्गर्भोऽवृणीता३दाइवा२न्। अदधादिन्द्रे पवमाना३ओ
र ५र १　२　२
जा२ः। अजनयत्सूर्ये३ज्यो२३। तिरिन्द्राउवा३। ए३।
१ २ १र २र १र २ १　१ १ १ १
अजनयत्सूर्येज्योतिरि। दू२३४५ः॥ ४॥ ७६

"पराशरऋषिः†"। "महिषः" महान्‡ पूज्यो वा "सोमः" "महत्" प्रभूतं¶ "तत्" कर्म "चकार" अकरोत्। किं तत्?

---

* उ॰ ५,२,१,३ = ऋ॰ ७.४,१६,१ = ऊहे १७,२,१—२?,?,४—२?,१,८—२१, २,९ = ऊह्य ६, २,५।

† "पराशरः"—इति ऋषि-लै॰।

‡ यथाह यास्कः—'महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवानामाधिपत्य मदधादिन्द्रे पवमान ओजोऽजनयत् सूर्ये ज्योतिरिन्दुरादित्य इन्दुरात्मा'—इति नि॰प॰२,१७।

¶ 'महत प्रभूतमाचम्'—इति वि॰।

अथैकादशी।

१ २ ३ १ २ २ ३ १ ३ २ ३ २ ३ १ २ ३ १ २ ३ २
असर्जिवक्वारथ्येयथाजौधियामनोताप्रथमामनीषा।

३ १ २ ३ २ ३ २ ३
दशस्वसारोअधिसानो

१ २ ३ २ २ ३ २ १ २ ३ १ २
अव्येमृजन्ति*वह्निᳪसदनेष्वच्छ॥ ११ ॥ ७७ †

"अपाङ्गर्भः" उदकानां गर्भभूतः‡ जनयितृत्वाज्जन्यत्वाद्वा। स सोमः "देवान्¶" "अवृणीत"§ समभजतेति "यत्" तत् ज्ञातवानिति। किञ्च। "पवमानः" पूयमानः‖ सोमः "ओजः"+ सोमपानजन्यं बलम् "इन्द्रे"÷ "अदधात्" न्यधात् तथा "इन्दुः" सोमः × "सूर्ये"** "ज्योतिः" तेजः†† अजनयत्‡‡ ॥ १० ॥ ७६

* "अव्येमृजन्ति"—इति ऋ०।

† ऋ० ७,४,१,१=आरण्ये १,२,२१।

‡ 'अपां यद् गर्भदर्शनमाव' पञ्चानां भूतानां गर्भः'—इति वि०।

¶ 'इन्द्रियाणि'—इति वि०।

§ 'अवृणीत अधिष्ठितवान्'—इति वि०।

‖ 'पूयमानः विषयपमाणेन'—इति वि०।

+ 'ओजः बलं मणिमादि'—इति वि०।

÷ 'इन्द्रे आत्मनि'—इति वि०।

× 'ज्योतिरिन्द्रादित्यः अध्यात्मम्'—इति वि०।

** 'सूर्ये सरथमीले'—इति वि०।

†† 'तेजः इन्द्रः'—इति वि०।

‡‡ 'तथापोऽमः—येन दूर्यं पश्यति'—इति वि०।

१ १ २ १ १ १
(वासिष्ठम्॥) असाव्यौ३होवा। जिवाक्का२। रथ्या

२ ५र २ ११११ २ १ २ २ १
इया३४। था। जा२३४५उ। धियाऔ३होवा। मनो-

१ २ ५र २११११ २ १ २ २
ता२। प्रथमामा३४। नो। षा२३४५। दशाव्यौ३होवा।

१ १ २ ५ २ ११११ १ १
स्वसारा२ः। अधिसानो३४। अ। व्या२३४५इ। मृजा

२ २ १ १ २ ५
औ३होवा। तिवाह्नो२म्। सदनाइषू३४। अच्छा२उ।

१११
वा३४५॥ ५॥ ७७

कश्यपऋषिः*। "वक्वा" शब्दायमानः [वच परिभाषणे (अदा०प०) वनिप्] तादृशः पवमानः सोमः "आजौ" अजन्ति कर्मार्थं ऋत्विजइति आजिर्यज्ञः तस्मिन् "धिया" कर्मणा स्तोत्रेण वा† साकम् "असर्जि" पात्रेषु सृज्यते‡। तत्र दृष्टान्तः। "रथ्ये यथा" रथ्ये रथार्हे [आजौ सङ्ग्रामनामैतत्¶। अजन्ति प्रक्षिपन्त्या युधान्यत्रेति तस्मिन्] अश्वो यथा सृज्यते तद्वत्। कीदृशः? "मनोता" यस्यां देवानां मनांसि प्रोतानि सा [तथाच ब्राह्मणम्—"तस्यां हि तेषां मनांसिप्रोतानि"—इति] "प्रथमा"

---

* "मारीचः"—इति ऋषि-नि०।

† 'धिया प्रज्ञया कर्मणा वा'—इति वि०।

‡ 'सृज्यताम्'—इति वि०।

¶ नि० नै० २,१७,८।

अथ द्वादशी।

२२ ३१२ २ २१२ २ १२३१२ ३२३१२
अपामिवेदूर्मयस्ततुराणाःप्रमनीषाईरतेसोममच्छ।
२ २३ १ २२२ ३१२
नमस्यन्तीरुपचयन्तिसञ्चा
२र ३१३१२
चविशन्त्युशतीरुशन्तम्॥१२॥७८*

॥ पञ्चमदशति ॥ ॥ अर्द्धः प्रपाठकः ॥

५ ४र ५ ४र५र ४ ५ ४र
(अपाञ्च साम॥) अपामिवेदूर्मयस्तौ। होवा।
५ २२३ ३र २ १ २र १ २र
हाइ। तुराणा२३४ः। हाहोइ। प्रमनी। षाः। ईर-

मुख्या "मनीषा" मनस ईषा मनीषा स्तुतिः तद्वान्। यद्वा। धिया विदधाति स्तुतीरिति धीः स्तोता तेन स्तुतिः प्रेर्यते। किञ्च। "दश स्वसारः" दशसङ्ख्याका अङ्गुलयः† "सदनेषु" यज्ञगृहेषु पात्राण्यभिमुखीकृत्य "वह्निं" वोढारं सोमं "सानौ" समुच्छ्रिते [अधिः सप्तम्यर्थानुवादकः] "अव्ये" अविभवे अविबालेन कृते पवित्रे "अञ्जन्ति" प्रेरयन्ति‡॥

"प्रथमा मनीषा"--"प्रथमो मनीषी"—इति, "सदनेषु"--"सद्मानि"—इति च साम्न ऋचः पाठः॥ ११॥ ७७

* ऋ० ७,४,५,२।

† "स्वसारः"—इति अङ्गुलिनामसु षष्ठमं नैघण्टुकम् २,५।

‡ "अञ्जन्ति"—इति तु ऋग्वेदीयः पाठः, तमेवाश्रयाञ्चक्रिरे सायणेन। सामवेदीयपाठस्तु "मृजन्ति"—इति; अतएव 'मृजन्ति शोधयन्ति'-इति वि०।

२, ३ ५　२　३र २　१
तेइ । सोमम । च्छा३४ । द्दाहोइ । नमस्य । ताइ: ।
२　२ ३ ५　२　३र २　१ १
उपचाइ । यन्तिसम् । चा३४ । द्दाहोइ । आचवि ।
१　२ ३　२, ३ ५　२　३र २　५र
शा । तियुश । तीरुश । ता३४म् । द्दाद्दा३४ । औ
र　२ १ १ १ १ १
होवा । वा३द्दा२३४५: ॥ ६ ॥ ७८

प्रस्कण्वऋषिः* । "अपामिव" यथा उदकानाम् "ऊर्मयः" त्वरन्ते । "इत्"—इति पूरणः । तद्वत् "तर्तुराणाः" कर्मणि देवान् स्तोतुन्त्वरमाणाः । [तुर त्वरणे जौहोत्यादिकः (धा०) । यङ्लुगन्तस्य शानचि रूपम् । अभ्यासस्य उवर्णस्य रेफादेशश्छान्दसः । अभ्यस्तस्वरः†। तादृशा ऋत्विजः "मनीषाः" मनस ईशित्रीः स्तुतीः "सोममच्छ" सोमं प्रति प्रेरयन्ति । "नमस्यन्तीः" नमस्यन्त्यः सोमं योजयन्त्यः सत्यः तम् "उपयन्ति" च । उप समीपे गच्छन्ति । तमेव "संयन्ति च" सङ्गच्छन्ते । "[च वा योगे प्रथमा (८,१,५९)—इति न निघातः] "उशतीः" कामयमानाः स्तुतयः "उशन्तं" कामयमानं सोमम् "आविशन्ति च" प्रविशन्ति च ।' १२ ॥ ७८

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे
छन्दोव्याख्याने पञ्चमस्याध्यायस्य सप्तमः खण्डः ॥

॥ इति त्रैष्टुभम् ॥

---

* "काण्वः"—इति ऋर्चि-नै० ।

† "अभ्यस्तानामादिः (६, १, १८९)"—इति पा०।

पुरोजितीति-मुख्यास्तु नवर्चो बृहतीत्यसौ—
"आदर्य्यतायधृष्णवे" शिष्टा अनुष्टुभः स्मृताः* ॥
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे † ॥

तत्राष्टमे खण्डे—

सैषा प्रथमा।

२ १ २ ३ १ २ ३ १ २ ३ १ २
पुरोजितीवोअन्धसःसुतायमादयित्नवे।
३ १ २ ३ १ २ ३क २र
अपश्वानꣳश्नथिष्टनसखायोदीर्घजिह्व्यम् ॥ १ ॥ ७९ ‡

५ र २ ३ ५ २
(प्रह्वौ द्वौ ॥) पुरोजिती। वाअन्धा२३४साः। सु-
१र २ ५ १
तायामाऽ२दया३१उवायेइ। त्ना२३४वे। अपश्वाना२ꣳ

---

* पुरोजितीतिमुख्याः 'पुरोजितीवोअन्धसः'-इतिप्रभृतयः नव ऋचः, अत्राष्टमे-खण्डे न्यूयन्त इति शेषः। तत्र आदर्यतायेति सप्तमी ऋक् बृहतीच्छन्दस्का, शिष्टाः अष्टौ अनुष्टुप्छन्दस्का इत्यर्थः।

† 'विनियोगस्त्वासां ज्योतिष्टोमे'—इति वि०।

‡ उ० १,१,१८,१ = ऋ० ७,५,१,१ = आरण्ये १,२,२२ = ऊहे १,१,११—१,१,१२—२,१,१८—४,१,१३—४,१,१४—६,२,९—७,२,१०—८,२,१५—८,२,१६—८, २,१७—१०,१,२—१०,१,१७—१२,१,६—१२,२,११—१२,२,१२—१२,२,१३—१२,२,१४—१३, १,६—१३,२,६—१४,१,२—१६,१,८—१६,१,९—१६,२,६—१७,१,२—१७,१,४—१७, १,१७—२०,१,१८—२०,२,११—२०,२,१३—(२१,२,१)—२१,२,२— २२,१,६—२२,१, ७—२२,१,९—२२,२,१३—२२,२,१५—२३,१,९ = ऊह्ये २,१,१—२,१,१८—२,२,२—२,२,५—३,१,१—३,१,१९—३,२,२—४,१,८—४,२,५—४,२,८—४,२,१४— ४,२,१६—(५,१,८—५,१,११)—५,२,१४—६,१,११।

२ ५ १ र
अथा३१उवायेर। ष्ठा२३४ना। सखायोदी॥२र्घजा३१

२ ५
वायेर। क्षीर२३४याम्॥ ७॥

५र २ १ २ २ १ २र
पुरोजिती। वो३अन्धा३साः। स्वनायमा२। ऊ२।

१ २ २ १ २र
वा२३। ओ॥२। दा३याइत्वा३वे। आपश्वाना२म्।

१ १ २ २ १ २र
ऊ२। वा२३। ऊ॥२। आ३याइष्टा३ता। माखा

र १ १ २
योदा२३। ऊ२। वा२३। ऊर३। घा२जार३४

५र र १ १ ११२५
औहोवा। ए३। क्रिया२३४५म्॥ ८॥

५र र २ ५ २र
(कार्त्तयशम्॥) पुरोवावाउ। जा२३४इती। वो

१ २ २ ४ ५ २१ २ २ ४ ५
आऔ३होर। धामाः। सुताऔ३होर। यामाई।

५ २ १२र १२ १ र २ २
वाउवा। दयित्वेर। उपा। अपश्वान॥अथा१इष्टा

२ १ २ २ ४ ५ ५ २
इना। सखाऔ३होर। योदाई। वाउवा। घजि

१ २ १११६
क्रियम्। उपा२३४५॥ ९॥

५४र ५ र ४ ५ ४
(औक्ष्णोरन्ध्रम् ॥) पुरोजितीवोअन्धसः। ओवा-
५ २ र र १ र
हाइ। सुतायमादयित्नवओवा२३होइ। अपश्वान९
१ २र र १ १ २
श्नथिष्टनओवा२३होइ। साखायोदाइ। घाजिह्वा२३
२ २ १र २ १ र ऽ ३ १
४५याई५६म्। सुवृक्तिभिर्मादनम्भरे२पुवा१ ॥ १० ॥

३ २ २ ४ र ५ २
(श्यावाश्वम् ॥) पुरा३१। जी३ती। वोअ। धा
४ ५ १ र र २ १
३सः। एहिया। सू। तायमादा। यि। त्नवा२इ।
१र १र २ ४ ५ २र
एहिया२। अपश्वान९श्ना३थी३। ष्टा२३४ना। ऐहा
१र र १र २ ४ २
२इ। एहिया२। सखायोदाइघा३जी३। ह्वा२३४५ये।
५
६हाइ ॥ ११ ॥

५ र र ५ २ १र
(आन्धीगवम् ॥) पुरोजितीवो४न्धासाः। सुताय।
र २ १ १ र र २
मादा२३या। ऊम्मा२१ऽ२। त्नवेअपश्वान९श्नथिष्टन।
१ १ २ १ २ १
साखा३उवा। यो२दो। घा२३जी। ह्वियाम्। औ
४ ५ ४
२३होवा। हो५इ। डा ॥ १२ ॥ ७९

अथ द्वितीया ।

२ ३ २ ३ १ २३उ ३ १ २ ३ १ २

अयम्पूषारयिर्भगःसोमःपुनानोअर्षति ।

३ १ २ ३ १ १ २३क १२ ३ १ २ १ २

पतिर्विश्वस्यभूमनोव्यख्यद्रोदसीउभे ॥ २ ॥ ८०*

श्यावाश्वऋषिः† । हे "सखायः" सखिभूताः समानख्याना वा हे स्तोतारः ! "वः" यूयं "पुरोजिती" [षष्ठ्याः पूर्वसवर्णदीर्घः‡] पुरः-स्थित-जयस्य "अन्धसः" अदनीयस्य सोमस्य अभूताय "सुताय" अभिषुताय "मादयिष्णवे" अत्यन्तं मदकराय रसाय "दीर्घजिह्व्य" [दीर्घा जिह्वा अस्य स दीर्घजिह्वी "दीर्घजिह्वी च छन्दसि (४,१,५९)—इति "ङीषन्तत्वेन" निपातितः । तादृशं] "श्वानं" च "अपश्नथिष्टन" अपश्नथयत¶ अपबाधध्वम् । यथा श्वा राक्षसा वा "सुतं" सोमं न लिहन्ति तथा कुरुतेत्यर्थः ॥ १ ॥ ७९

---

* उ० ९,१,११,१ = ऋ० ७,४,२,१=चारचो १,१,८—१,१,१०—१,१,१८—१,१,१९ अचे१,१,८—२,१,९—७,१,९—११,२,१०—११,१,१०—१३,१,१—१४,१,११—१५,१,१४—१५,१,१०—२०,१,५—१०,१,१८—२१,२,९=अंचा१,१,६—१,१,८—१,१,११—१,१,११—५,१,९—६,१,८ ।

† 'चाक्षीगुः श्यावाश्विः'—इति ऋषि मे० ।

‡ सुपांसुलुगित्यादिना (७,१,३९) ।

¶ 'निर्बिलीकरोतु'—इति वि० ।

(क्रौञ्चानि त्रीणि ॥) अयम्पूषो३। रायिर्भगाः। सो

मःपुनार। नोषार्षापुता६५६इ। पतिर्विश्वो३। स्या-

भूमनाः। वियख्यद्रो३। दासी३उभा६५६इ ॥ १३ ॥

अयम्पूषा। अयम्पूषा। रयिर्भगाः। सोमःपूना

२। नोषर्षताइ। पतिर्वाइश्वा२। योख्याभू१माना२ः।

ओइवियख्या२३द्रो। द्रासीउभ। इडा२३भा३४३।

ओ२३४५इ। डा ॥ १४ ॥

अयम्पूषा। यो। रयिर्भगा६१। सोमा२ःपुना२।

नषा३४५। षा२३४तौ। पतिर्विश्वस्यभूमनः। विय-

ख्या२३द्रो। दसीजर३भा३४३इ। यो२३४५इ। डा ॥

॥ १५ ॥ ८०

अथ तृतीया ।

२ १ २ १ २ ३ १ २ ३ १ २ ३ १ २
सुतासोमधुमत्तमाःसोमाइन्द्रायमन्दिनः ।
२ ३ १ २ ३ १ २ ३ १ २
पवित्रवन्तोअक्षरन्देवान्गच्छन्तुवोमदाः ॥ ३ ॥ ८१*

३ १ २ २ २ १२
(त्वाष्ट्रीसाम ॥) सुतासोमा । धुमा२त्तमाः । सो-
२ २ २ ३ १ २ ३ २ २
माइन्द्रा२३यमा३ । ए३ । न्दिनपा । पवाइत्रवा२न्तो

अन्वतिर्नाङ्गुषच्छषिः[†] । "पूषा" पोषकः सर्वेषाम्[‡] । "भगः" भजनीयः[¶] "रयिः" धनहेतुः "अयं" सोमः "पुनानः" पवित्रे पूयमानः सन् "अर्षति" कलशमभिगच्छति । तथा "विश्वस्य" सर्वस्य "भूमनः" भूतजातस्य "पतिः" पालयिता[§] "सोमः" "उभे" "रोदसी" द्यावापृथिव्यौ "व्यख्यत्" स्व-तेजसा प्रकाश-यति । अनेन लोकद्वयपतित्वं सूचितम्[‖] ॥ २ ॥ ८०

---

• उ० ९,२,१५,१ = ऋ० ७,५,१,४ = अन्ये २,१,१—१,१,१—१,१,४—७,१,१०—१५, ९,१—१६,१,१—१०,१,११—१०,१,११—११,२,११ = अर्ध ९,१,१६—४,१,६— ५,९, ११—५,२,११—६,१,१०—६,१,१५—६,१,१ ।

† 'नाङ्गपो मानवः'—इति ऋषि-नि० ।

‡ 'पूषा पुष्णातेः । सोमः । अथवा पूषा आदित्यः'—इति वि० ।

¶ 'भगः सर्वस्य लोकस्य सेवनः'—इति वि० ।

§ 'आदित्यात्मना'—इति वि० ।

‖ 'निमिषोमोऽत्र द्विशिक्षितर्मि'—इति वि० ।

दा२३४इना:। पवित्रवा३न्तोअचारा२न्। अचा३र्वो।
तो२चा२३४रान्। देवान्गच्छा३न्तूवो१मादा२ः। देवा
३न्वोइ। गच्छो२३४वा। तूर्वा२३४औहोवा। मदा-
३ग्ना२३४५॥ १९॥

(वासिष्ठम्॥) सुतासोमधुमत्तमाइए। सोमाइ
न्द्रा३यामन्दिना२ः। दाइना२ः। पवित्रवा३न्तोअक्षा-
रा२न्। अक्षारा२न्। देवान्गच्छा३न्तूवो१मादा२ः।
मादा२ः। देवा३न्वोइ। गच्छा२३४वा। तूर्वा२३४औ
होवा। मदा३ईऽ२३४५॥ २०॥

(आरत्वाष्ट्री॥) सुतासोमा३वा। धुमत्तमा२ः।
सोमाइन्द्रा३वा। यमन्दाइना२ः। पवित्रवा३वा। तो-
अक्षारा२न्। देवान्गच्छा३वा। तुवो३हो२३४। वा।
मा४ऽदो३ऽवाइ॥ २१॥

(हिरण्यसाम्वाष्ट्री ॥) सुता। सोमा३। हाश्हा। सुमत्तामा२३४:। सोमाः। इन्द्रा२। हाश्हा। यमन्दाइना२३४:। पवि। त्रवा३। हाश्हा। तोषवारा२३४न्। देवान्। गच्छा३। हाश्हा। तुवोश्होा२३४। वा। मा५दोा६हाइ ॥ २२ ॥

(वासिष्ठम्॥) सुतासो३माधुमत्तमाः। सोमा इन्द्रा। यमन्दिनः। पावाश्रो२३४वा। त्रवन्त। अत्तरन्। देवान् गच्छ। तुवोमा२३दा३४३:। श्रो२३४५इ। डा॥ ॥ २१ ॥ ८१

ययातिर्नाहुषऋषिः*। "मधुमत्तमाः" अतिशयेन माधुर्योपेताः अतएव "मन्दिनः" मदकराः "सुतासः" अभिषुताः सोमाः "पवित्रवन्तः"† पवित्रे वर्त्तमानाः सन्तः "इन्द्राय" इन्द्रार्थम् "अक्षरन्" पात्रेषु क्षरन्ति। अथ प्रत्यक्षस्तुतिः। "वः" युष्माकं

* 'विनियोगोऽस्य तृतीयेऽयमि'—इति वि०।

† 'दशापवित्रमागाः'—इति वि०।

अथ चतुर्थी।

१ १ १२१२ १ २ २ २ २
सोमाःपवन्तइन्दवोऽस्मभ्यङ्गातुवित्तमाः।
१२ २ १ २ २ १ २ ३क २र ३ १ २
मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः॥ ४ ॥ ८२०

४ ५ २ १ ७ १
(कौञ्चे द्वे॥) आउसोमाः। पवाइन्ताइन्दावाउ।
२ १ १ ७ २ २
वा३। आउवा। अस्मभ्यङ्गातूवित्तामाउ। वा३। आ
१र २ र २ २ १
उवा। मित्राः स्वानाअरे१पासाउ। वा३। आउवा
२र २ १ १ ५ २ ५
३४। सुवा। धिया३ः। स्व२३वाः। वा३४५इदोइडा
इ॥ २४॥

२र र २ १ २ ४ ५ २ १ २ १ २ १ २ १
सोमाः पवन्तइन्दवाः। अस्माभ्यङ्गा। तुवित्तमाः।
२ २ ५ १र२र २र१२ २ र २ १ १ १
माइत्राओ२३४वा। स्वानाअरेपसः। सुवाधियाः। सुव
१ १
र्वारइइदा३४३ः। ओ२३४५इ। डा॥ २५॥ ८२

"मदाः" मद-हेतवो रसाः "देवान्" इन्द्रादीन्[†] "गच्छन्तु"॥
॥ ३॥ ८१

* उ० ४,१,२०,१—ऊ० ७,५,१,५=अखे १,२,११—२,१,१४—३,२,१५—६,१,१६—१५,२,१६—१५,२,१०—१५,२,१८—१६,१,१—२१,१,१४=अखे ६,१,२०।

† 'इन्द्रादीन्'—इति वि०।

अथ पञ्चमी।

१ १ २ २ १ २ १ १ २ २ १ १
अभीनोवाजसातमꣳरयिमर्षशतस्पृहम्।
१ २ २ १ २ २ १ २२ १२
इन्दोसहस्रभर्णसन्तुविद्युम्नंविभासहम्॥ ५॥ ८३*

५ र र १ ४ १
(सोमसामानि त्रीणि॥) अभीनोवा। आ२सा२३
४र र १ ४ ५ २ १ २ १ २ १ र
४यीहोवा। ता२३४माम्। रयिमरिशतस्पृहम्। इन्दो

मनुः सांवरणऋषिः। "गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः† "इन्दवः" दीप्ताः‡ सोमाः "पवन्ते" अस्मभ्यं मदर्थं "यरन्ति" आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः "स्वानाः" अभिषूयमाणाः "अरेपसः" पापरहिताः अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः॥

"स्वानाः"-"सुवानाः"—इति पाठो॥ ४॥ ८२

* ऋ० ५,१,१६,१ = ऋ० ७,४,२१,१ = ऊहे ५,१,२—५,१,४—५,१,५ — ५,१,६—५,१,७—५,१,८—१२,१,१५—१२,१,१६—१७,१,११—१७,१,१२—१७,१,१४—१७,१,१६—१८,१,१०—१९,१,२—१९,१,९।

† "गातुः"—इति पृथिवी-नामसु त्रिंशत्तितमं नैघण्टुकम् १,१। किञ्च निरुक्त-चतुर्थे—"गातुं यज्ञाय गातुं यज्ञपतये इत्यपि निगमो भवति। गमनं यज्ञाय गमनं यज्ञपतये"—इति च यास्कः।

‡ 'ज्योतिरिन्दुः'—इत्यादि नि० नै० प० २,१७।

सत्रस्नभा२३हो। णसा२म्। तुविद्युम्न विभा२३होवि
३। सत्रमो२३४५इ। डा॥ २६॥

अभीनोवा। जासातमम्। रयिम। र्षाउवा२३।
होवा३हाइ। शतस्पृहम्। इन्दा२स। हाउवा२३।
होवा३हा। सभर्णसम्। तुवाये३। द्यु२म्ना२३४औहो
वा। विभासहा२३४५म्॥ २७॥

अभी२होइ। नोवाजा३सा३। ताता२३४माम्।
रयी२होइ। मर्षआ३ता३। शास्पृ२३४हाम्। इ
न्दो२होइ। सहस्रा३भा३। र्णा२३४साम्। तुवा
२होइ। द्युम्नं वी३भा३। हा३सा५हाइ५ईम्॥ २८॥

(क्रौञ्चम्॥) अभीनोवा३१२३४। जसा। तमा२
म्। रयिमर्षा३१२२४। शत। स्पृहा३म्। इन्दो

१ ५ ११ ११ २
साश्वा३१२३४। ऽभ। पासा३म्। तुवा३ द्युम्ना३१२३

४
म्। विभा५सहा३उ। वा॥ २९॥

४ २ २ २ २ ४
(सोमसाम॥) अभीनोवाँ हो५जसातमाम्। रँयि

२ ४ २ २ ४
मर्षौँहो५शतस्पृहाम्। इन्दोसहौहो५स्रभर्णसाम्।

२ २ ४ ५ ४ ५
तुविद्युम्नौहो५विभासहाम्। सहम्। तुविद्युम्नं विभा६।

५ २ ११११११
हाउवा। सहा३मे२३४५॥ ३०॥ ८३

अम्बरीषऋजिश्वानो* ऋषयो। हे "इन्दो" दीप्यमान सोम! "वाजसातमम्" अत्यन्तं बलप्रदं अन्नप्रदं वा धनं पुत्रं "नः" अस्माकम् "अभ्यर्ष" अभिगमय†। कीदृशम्? "शतस्पृहं" बहुभिः स्पृहणीयम्। "सहस्रभर्णसं" बहुविधभरणम् अनेक-पोषण-युक्त मित्यर्थः। "तुविद्युम्नं" [द्युम्नं द्योततेर्यशो वान्नं वेति‡ यास्कः] बह्वन्नं बहुयशोयुक्तं वा। "विभासहं"¶ महतः प्रकाशस्याभिभवितारम् अतितेजस्विन मित्यर्थः॥

* "अम्बरीषः वार्षागिरः"—"ऋजिश्वा भारद्वाजः"—इति ऋषि-मै०।

† अर्षेति अर्षतेर्गति-कर्मणो रूपम् (१,१४)।

‡ "द्युम्नं द्योततेर्यशो वान्नं वा "अस्मे द्युम्नमधि रत्नञ्च धेहि" अस्मासु द्युम्नं च रत्नं च धेहि"—इति निरु० मै० ५, ५।

¶ "विभासहः" शब्दोऽसौ एकपादेव न पूयते निवेद-संहिताखिलि श्लोकम्।

अथ षष्ठी।

१ २ २　　३ १ २　१ २र　३र ३ १ २
अभीनवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम्।
१ २उ　१ २र ३र　२ १　२　　३ १ २
वत्सन्नपूर्व आयुनि जातꣳरिहन्ति मातरः॥ ६॥ ८४

(आङ्गिरसानि त्रीणि॥) पा२३४भी। ओइनवन्त
आऽ१ह्वा२ः। ओइप्रियमिन्द्रस्यकामा१या२म्। ओइ
वत्सन्नपूर्वआयू१नो२। ओइ। जातꣳरिहन्तिमो१२३
४। वा। तापूरोईहाइ॥ ११॥

अभो। नवो३२। तआ५द्रुहाः। प्रियामिन्द्रा३।
स्याकामा२३४याम्। वत्सन्नपू३। र्वाआयू२३४नो।
जाता२ꣳहाइ। रिहा३हो। तिमाता२३रा३४३ः। ओ
२३४५इ। डा॥ १२॥

"अतस्पृह"-"पुरस्पृहम्"—इति, "विभासह"-"विभ्यासहम्"
—इति च साम्न ऋचः पाठः॥ ५॥ ८३

* ऋ० ७,४,२०,१ = आरण्ये .१,२,२४—३,१,१—३,१,४—४,१,११।

अथ सप्तमी ।

१ २ ३ १ २२ १ २ १ २ ३ १ २

आ हर्यताय धृष्णवे धनुष्टन्वन्ति* पौंस्यम् ।

२ ३उ ३ १ २ ३ १ २ ३ १र २र ३ १ २

शुक्रा वियन्त्यसुराय निर्णिजे विपामग्रे महीयुवः ॥ ७॥८५†

५ ४र५ र ४५ ४ ५४ ५ ४र५

अभीनवन्ते अद्रुहः । ओहाइ । प्रियमिन्द्रस्यकामि

४ ५ ४ र५ ४र५ र ४ ५

यम् । ओहाइ । वत्सन्नपूर्वआयुनि । औहोवाहा

१ २ २ ५ २१ २ ४

इ । जातꣳरिहौवा । तीर२३४मा । तरा । औ३हो

५ ४

वा । हो५इ । डा ॥ २२ ॥ ८४

ऋषभ-सूनू काश्यपो द्वयोः‡ । यथा "मातरः" गावः "पूर्वे" प्रथमे "आयुनि"¶ वयसि "जातं" वत्सं "रिहन्ति" लिहन्ति तथा "अद्रुहः" अद्रोहाः वसतीवर्याख्या आपः इन्द्रस्य "प्रियं" काम्यं सर्वैः काम्यमानं सोमम् "अभि नवन्ते"§ अभिगच्छन्ति ॥ ॥ ६ ॥ ८४

---

* "अनुक्षन्वन्ति"—ऋ० ।

† ऋ० ७,४,२५,१ ।

‡ धनाः परस्पराभेत्यर्थः । न चात्र यथासङ्ख्यम् ।

¶ "आयवः"—इति मनुष्य-नामसु सप्तदशं नैघण्टुकम् (२,३) । इह तु तदेव जीवता वयोऽर्थता चेष्टा भगवतः सायणस्य ।

§ "नवते"—इति गति-कर्मसु अशीतितमं नैघण्टुकम् २,१४ ।

(गृत्समदस्य सूक्तानि चत्वारि ॥) भाहाइ । घोर२३
४वा । यंतायष्णावेर । धनूइः । घोर२३४वा । तम्व
न्तिपौᳲसियम् । पुरुकाइः । ओर२३४वा । वियन्त्वसु
रायनिर्णिजेर । विमाइ । ओर२३४वा । अग्रे रमधी
युवार२३४५ः ॥ २४ ॥

हाउहाइ । आघयंता । यार२३४५ । हाउहाउ३४ ।
औहोवा । व्णार२३४वे । हाउहाइ । धनूछान्वा ।
तीर२३४पौ । हाउहाउ३४ । औहोवा । सौ२३४याम् ।
हाउहाइ । पुरुकाविय । ताभ्रसुरा । यार२३४नो ।
हाउहाउ३४ । औहोवा । णोर२३४जे । हाउहाइ ।
विपामाग्राई । मार२३४धो । हाउहाउ३४ । औहोवा ।
यूर२३४वाः ॥ २५ ॥

४ ५ ३ र ५ ४ ५ ४ १ २ १
पाहर्यतायधृष्णावश्रा। धनूष्टा१न्वा२। तिपौं७

२ १ र २ १ ७ २ १ २
सा१या२म्। घृक्काविय। ताम्रसुरा३। यानीरर्णा२३४

५ १ २ १ ४
इजाइ। विपामा१ग्रा२इ। श्रोइ। मा२३ह्रौ३।

२ ५
यू३४५वोह्राइ ॥ २६ ॥

२ ५ १ ५ २ ४ ५ १
श्रा४हर्य। ता४यधृ। ष्णा३वोधनुष्टन्वा। तिंपौ

३ २ १ र २ १ ७ २ २ १
७सियाम्। घृक्काविय। ताम्रसुरा। यनाउवा३।

५ १ २ २ १ १ २ १र
णो२३४जे। वाइपा३७ह्राइ। श्राग्रे३ह्राई। मह्रीयू

२ १
२३वा३४३:। श्रो२३४५इ। डा ॥ २७ ॥ ८५

"हर्य्यताय"* सर्वैः स्पृहणीयाय "धृष्णवे" शत्रूणां धर्षणशीलाय सोमाय "पौंस्यं" पुंस्त्वस्याभिव्यञ्जकं वरं "धनुरातन्वन्ति" धनूंषि ज्यां कुर्वन्तीति सोमस्य धारा-विसर्गार्थं वितायमानं पवित्र मभिधीयते। तदेव विवृणोति—"विप्रा" मेधाविनो "अग्रे"† पुरस्तात् "मह्रीयुवः"‡ पूजाकामा अध्वर्य्यवः

* 'हर्य्यतिः प्रेप्साकर्मा'—इति नि०।

† 'अग्रे प्रथमे'—इति नि०।

‡ 'महत्त्वोमं मिमयन्ति रक्षवः ऊद्वाणि वा'—इति नि०।

अथाष्टमी।

२३ १ २३ १२ १२३ १ २ २ १ २

परित्यꣳहर्यतꣳहरिंबभ्रुंपुनन्तिवारेण।

१२उ २ १उ २ १ २ २ १२ २१

योदेवान्विश्वाꣳइत्परिमदेनसहगच्छति॥ ८॥ ८९*

२ ४ २ ४ २ ४ ५

(द्विरभ्यस्तमाकूपारम्॥) परित्यꣳहर्यतꣳहरिम्।

१ २ ४ २ ४ १

पा२३४। रित्यꣳहौहोर्यतꣳहराइम्। बभ्रुंपुनन्ति

२४२ ५ १ २ २ ४२ १२ ४२

वारेण। वा२३४। भ्रुंपुनौहो५न्तिवारेणा। यादे

“शुक्राः”† शुक्लवर्णानि गो-पयांसि “असुराय”‡ बलवते “निर्णिजे” स्वरूपाय शोधनार्थं “वयन्ति”¶ आच्छादयन्तीत्यर्थः॥

“शुक्राविययन्त्यसुरायनिर्णिजे”-“शुक्रावयन्त्यसुरायनिर्णिजम्” —इति साम्न ऋचः पाठो॥ ७॥ ८५

---

* उ० ५,२,१८,१—८,१,८,३ = ऋ० ७,४,२४,१ = आर्षे ५,७,१८—५,२,१९—५,२,२० —६,१,१—६,१,२,— ६,१,३—१२,१,१— १२,१,२—१४,२,१६—१४,२,१७—१४,२,१८—१४,२,१९—१४,२,२०—१४,२,२१ —१७,१,८— १७,१,९—१७,२,२—२०,२,४ = ऊह्ये ४,२,२।

† ‘शुक्राः शुचिवर्णाः’—इति वि०।

‡ ‘असुराय सुखाय वसुदानवते’—इति वि०।

¶ वयन्तीति पाठस्तु ऋग्वेदीयः। तमेवावलम्ब्यमेऽत्र व्याख्यातं भगवता सायणेनेति बोध्यम्। सामवेदीय-पाठस्तु वियन्तीति।

अथ नवमी।

१ २ ३ १र  २र ३ २ ३ १ २ ३ १र २र
प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।

३ १ २ ३ १ २ ३ १ ३ १र २र
अपश्वानमराधसᳬहतामखन्नभृगवः॥ ९॥ ८७*

॥ प्रथम-द्वशति॥

१र ४र ३ ४ ५ १ २ २ २ २ ४
वान्विश्वाᳬइत्परि। योर२३४। देवान्वौहो५श्वाᳬइत्प

३ ४र २ ४ ५ १ २ २
राइ। मदेनसहगच्छति। मा२३४। देनसौहो५ह-

४ ५
ग। च्छा५तोईद्दाइ॥ ३८॥ ८६

ऋजिश्वाम्बरीषावृषी†। "हर्यतः" सर्वैः स्पृहणीयं "हरिं" हरितवर्णं "बभ्रुं" बभ्रुवर्णं च "त्यं" तं सोमं "वारेण" बालेन पवित्रेण "परि‡ पुनन्ति" परिशोधयन्ति। "यः" सोमः "विश्वान्" सर्वानिन्द्रादीन् "देवानित्" देवानेव "मदेन" मदकरेण रसेन सह "परि¶ गच्छति" इति §॥ ८॥ ८६

° छ० ६,२,३,१—१,९,२२,२ – ऋ० ७,५,२,२ = ऊषे१,२,१७— १,२,१८—६,१,१७ —६,१,२०—११,२,२—११,२,९—११,२,१३—१५,१,१६—१६,१,१४— १८,१,१०—१९, २,१९—१९,१,२०—१९,२,२१—२१,१,७ = ऊह्ये २,१,४—२,२,४—६,१,६।

† "ऋजिश्वा भारद्वाजः—अम्बरीषो वार्षागिरः"—इति ऋषि-मै०।

‡ 'परि समन्तात्'—इति वि०।

¶ 'परि देवं व्याप्य'—इति वि०।

§ 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।

२ १　　३र　५　　१ २
(वैरूपम् ॥) प्रसुन्वा२३नायअन्धसा: । मर्त्ताः ।
१　　२२३　५　२ र २१　२　५
नवा२ । ष्टतद्वा२३४चा: । अपश्वानमरा । धा२३४सा-
२ १र　२　२२४
म् । हतामा२३खम् । नभृ३गा५वा६५६: ॥ ३९ ॥ ८७

॥ इति अष्टमः प्रपाठकः ॥

प्रजापतिर्ऋषिः* । "सुन्वानाय" अभिषूयमाणाय [षष्ठ्यर्थे चतुर्थी†] अभिषूयमाणस्य "अन्धसः" सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तान" मर्त्य इव कर्म-विघ्न-कारी "तवष्टन" कामयतां न शृणोत्विति यावत् । तथा हे स्तोतारः "अराधस" साधक-कर्म रहितः‡ । "श्वानम्" "अपहत" । तत्र दृष्टान्तः—"मखन्"¶ यथा पुरा अराधसं मखम् एतन्नामानं भृगवोऽपहतवन्तः तथा अपहतेत्यर्थः ॥

"सुन्वानाय"-"सुन्वानस्य"—इति, "वष्ट" "हते"—इति च साम्न ऋचः पाठः ॥ ९ ॥ ८७

इति श्रीमत्सायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्याष्टमः खण्डः ॥ ५ ॥

॥ इत्यानुष्टुभम् ॥

---

* "वाम्यः"—इति ऋषि सं० ।

† "षष्ठ्यर्थे चतुर्थी ति वाच्यम् ( २, ३, ६२ )"—इति का० वा० ।

‡ "साधन धन-रहितम्"—इति वि० ।

¶ "हतामखम्"—इति मन्त्र-पाठस्य 'हता'—'मखम्'—इति पदकारस्य छेदः ।

जगत्योऽभिप्रियाणीति मुख्या द्वादश सम्मताः*।
आद्यास्तिस्र ऋचो दृष्टाः कवि†नाम्ना महर्षिणा।
उत्तरा विप्रकीर्णत्वाद्वक्ष्यन्ते ऋषयः पृथक्‡॥

अथ नवमे खण्डे—

सैषा प्रथमा।

३ २ ३ १ २ ३ १ २ ३
अभिप्रियाणिपवतेचनोहितो
१ २ ३ २उ ३ १ २ १ २
नामानियह्वोअधियेषुवर्द्धते।
१ २र ३ २ ३ १उ ३
आसूर्यस्यबृहतोबृहन्नधि
२ ३ १ २ ३ २
रथंविष्वञ्चमरुहद्विचक्षणः॥ १॥ ८८¶

---

भगवान् सायणोऽपि तथैव व्याख्यातवान्। अत्र मते ऋतेत्याकारस्य द्व्यचोऽतइति (६,३, १३५) दीर्घे 'ऋता'—इति रूपम्॥ विवरणकारस्तु 'ऋत'—'अमृतम्'—इत्येवं छेदं स्वीकृत्य 'अमृतं यत्र वर्षितम्'—इति व्याचख्यौ।

* अत्र नवमे खण्डे अभिप्रियाणीत्याद्याः द्वादश ऋचः सम्मताः पूर्वाचार्य्याणामिति शेषः।

† "कविः भार्गवः"—इति ऋषि सं०।

‡ तत्र द्वादशसु आद्यास्तिस्र ऋचः कविनाम्ना महर्षिणा दृष्टाः। उत्तराः ऋचः नैकेन दृष्टा इति तत्र ऋषि-विप्रकीर्णत्वम् तस्मात् तत्र ऋषयः पृथक् वक्ष्यन्ते।

¶ उ० ६,१,१८,१=ऋ० ७,२,२३,१= आरण्ये २,१,६ ऊहे =१,१,१२—६,१,२—१४,१,१८—१६,१,१५—१८,१,१५=उह्ये १४,१,१—१८,१,१८।

ओम्॥ (कावम्॥) आभिप्री२३४या। णीपावा२३४
ताइ। चानोह्विता२३ः। नामानी२३४या। क्रोअधी
२३४ये। पूवर्ङ्तायि३। आह्वरी२३४या। स्वावृ्षा
२३४ताः। बृहन्नधायि३। राथंवा२३४इषा। चामाक्ष
२३४ह्वात्। विचा३१उवार२३। क्षा२३४णाः॥ १॥

(ऐडकावम्॥) ए५। अभिप्रियार२। णिपवताइ।
ए५। चनोह्विताः। ए५। भामानीयार२। क्रोषधि
याइ। ए५। पुवर्ङ्ताइ। ए५। आह्वरियार२। स्व
वृ्ह्वताः। ए५। बृहन्नधी। ए५। रथंविष्वार२। चम
क्षुह्वात्। ए५। विचक्षणाः। ओ५इ। डा॥ २॥

(वाजसनि॥) अभ्योचोवाहाइप्रियाणी। पवता
इचा२३४नो। ह्विताः। नामानियक्रोअधियेपुवर्ङ्ताइ।

२र १ २ र १ २१ २ १२
आद्धर्यस्यव्‌ हृतोव्‌ हृन्नधाइ। रुथम्। वाइषश्चमरुषत्।
२ १ ११११
विचा३१उवा२३। हा३णा२३४५ः॥ ३॥

२ १ २र १ १
(वाजजित्॥) अभिप्रिया। णीपवताइ। होइहो
२ १२ ५र ४ ५र ४ ५ २र
वा३होये३४। चनोहिताः। हाहो। वाहाइ। ना
र १ २र १ १ २ १२ ५
मानिया। ह्वोअधियाइ। होइहोवा३होये३४। युव
४ ५र ४ ५ २र र १ २र १
हृताइ। हाहो। वाहाइ। आहरिया। स्याव्‌ हृताः।
१ २ १२ ५ ४ ५र ४ ५
होइहोवा३होये३४। वृ हन्नधी। हाहो। वाहाइ।
२ १ २र १ २ १ २ ५
रथंविष्वा। चामरुषात्। होइहोवा३होये३४। विच
४ ५र ४ ५ ५ २र१र २ १
क्षणाः। हाहो। वाइहाउ। वा। वाजीजिगी२वा
ए१॥ ४॥

२ १ २र १ १र१र
(वाजजित्साम॥) अभिप्रिया। णीपवताइ। चानो
२ १ २र र १ २र १
हिताः। होवा३होइ। नामानिया। ह्वोअधियाइ।
२र १ २ १ २र र १ २र १
यूवह्वताइ। होवा३होइ। आहरिया। स्यावृहताः।

२र १ २ १ २ १ २र १
वृहन्नधाइ। होवा३हे। रथंविप्रा। चामहयात्।
२र १ २ १ २ ५र र १र१र
वीचक्षणाः। होवा३हो२। वार२३४औहोवा। वाजी
१र१र १र १ ५र २ १ १ १ १
जिगीवाविस्वाधनार्नी२३४५॥ ५ ॥

५ ४ २ १र १
( स्वारकावम् ॥ ) अभ्योवा। प्रियाणिपवताइ। च
र १ २र र र २ १
नोहाइता २ः। नामानियह्वोअधियाइ। युवहोता २इ।
१र र २ १ १ २ ४ ५
आहर्यस्यवृहतो। वृहन्नाधौ२३। राथा३०वाइषा।
२ १ १ २ ४
चमहया२३त्। वाइचा३क्षापूणा६५६ः॥ ६ ॥ ८८

"चनोहितः" [चन इत्यन्ननाम* चायतेरसुनि चन इत्यौणादिक-सूत्रेण निपातितः] चनसेऽन्नाय हितः। यद्वा। हितान्नः सोमः "प्रियाणि" जगतः प्रीणयितृणि नामानि नमनशीलानि तान्युदकानि "अभिपवते" अभितः चरति करोति। "येषु" अन्तरिक्ष-स्थितेषु उदकेषु "यह्वः" महानहं सोमः "अधि

---

* "अहोभ्य प्रश्निनानामानि हवींषि चनो दधिष्व। चन इत्यन्ननाम"—इति नै०६, १६।

अथ द्वितीया।

२ ३१ २ ३ १ २ ३ २
अचोदसोनोधन्वन्त्विन्दवः
२ ३ १ २ ३ २ ३ १ ३ १ २
प्रस्वानासोबृहद्देवेषुहरयः।
१ २ ३ १ २ ३ १ २ ३ १ २ ३
विचिदश्नानाइषयोअरातयो
१ २ ३ १ २ ३ १ २
र्योनःसन्तुसनिषन्तुनोधियः॥ २॥ ८९*

२ र १ २र १
(आङ्गिरसानि त्रीणि॥) अचोदासो२३। नोधनूवा
२र १ २ र १ २ १ २र
२३। तूइन्दवाः। प्रस्वानासो२३। बृहद्दाइवे३२। षू
१ २ १ २र १ २र १र
हरयाः। विचिदाश्ना२३। नाइषाया२३ः। आरातयाः।

वर्द्धते" अधिकं प्रवृद्धो भवति। अपां मध्ये सोमो वसति खलु। ततः "बृहन्" महान् सोमः "बृहतः" महतः परिवृढस्य "सूर्यस्य" "विष्वञ्च" विष्वग्गमनं रथम् "अधि" उपरि† "विच-क्षणः"‡ विश्वस्य द्रष्टा सन् "आरुहत्" आरोहति। "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते(म० ३,७६)"—इति ॥१॥ ८८

* ऋ० ७,३,४,१।

† "अधि उपरि आदित्यमण्डलात् चतुर्थं मण्डलं रथ विष्वञ्चं नाम"—इति वि०।

‡ विचक्षण' विविधं प्रकाशयन इत्यर्थः'—इति वि०।

अर्यानाःसा२३। तूमनाइषा२३। तूनाधिया३१उवा२३४५॥ ७॥

आचोदसो। नोधनुवन्तु। इन्दवाः। प्रस्वानासो। बृहद्देवेषु। हरयाः। वाइचिदश्ना। नाइपयोअ। रातयाः। अर्यानःमा। तुमनिप। तुनो५धियाउ। वा॥ ८॥

हाउहोवा३हाइ। अचोदसोनो३धा। नुवा३न्तू३। इन्दवा२३४५ः। हाउहोवा३हाइ। प्रस्वानासोबृ३३हात्। देवे३षू३। हरया२३४५ः। हाउहोवा३हाइ। विचिदश्नाना३आइ। पयो३आ३। रातया२३४५ः। हाउहोवा३हाइ। अर्यानःसन्तू३मा। निपा३न्तू३। नोधिया३२उवा३४५॥ ९॥

५ ४ १ र र २
(सामराजम्॥) अचोद्दाइ। दासोनोधनुवा। तु
१ १ र र र र २ १ ३
इन्दावा२ः। प्रखानासोब्‌हद्देवाइ। षुद्दरायार:। वि
५ २ ५ २र २
चो२३४द्दाइ। अग्नो२३४द्दाइ। नाइषयः। अरो२३४
५ १ २ ३ ५ ३ ५ २
द्दाइ। तायाः। अर्यो२३४द्दाइ। नःसो२३४द्दा। नू
२ ५ १ ऽ २ ५
सानो२३४षा। तूना३उवा३। धी२३४याः॥ १०॥

५ र ४ ५ १ र र
(सामराजम्॥) अचौद्दोवा। दासोनोधनुवाः।
२ १ १ र र र र २ १
तुइन्दावा२ः। प्रखानासोब्‌हद्देवाइ। षुद्दरायार३ः।
१ २ ४ ५ २ ३ ५ २ १ २ २
वाइचीउद्दाग्ना। नाइषार३४या। द्दोइ। अरातार
५ ३ १ २ ४ ५ २ ३ ५
३४याः। द्दो३इ। आर्यो३नाःमा। तूसानो२३४षा।
२ ३ २ ३
द्दो। तुनो३धा५याई५६ः॥ ११॥

५ र ४ ५ १ र
(मिमानानिषेधः॥) अचो। वाद्दाइ। दासो
र २ १ १ र र र र २
नोधनुवा। तुइन्द२वाः। प्राखानोसोब्‌हद्देवाइ। षुद्द

१   १   २   १   २   १२ ४
रायार२३ः। वार३इ्चौत्। आर२३। आ३४। नाइ

३ ४र ५र   २   १   १   २   १   २
षयोअर(। ना३याः। आर२३यां। नार२३ःसा३४।

३ ४ ५   ३ २ ४
तुसनिष। तुनो३धा५याई५ई: ॥ १२॥ ८९

"अचोदसः"* अचोदनाः अनन्यप्रेरिताः "इन्दवः" सोमाः "नः" अस्माकं† "प्रधन्वन्तु" प्रगच्छन्तु [ धन्वतिर्गति-कर्मा‡ ]। कुत्र? "बृहद्दिवेषु हरयः" प्रभूत-देवयुक्तेषु यज्ञेषु [ यथा वा बृहद्देवकुलजेषु मध्यते इति सम्बन्धः ] कीदृशा इन्दवः? "स्व-नासः" सूयमानाः "हरयः" हरितवर्णाः¶। किञ्च। "अरातयः" धनादि-दान-रहिताः "नः" अस्माकम् "अर्यः"§ अरयः "इषयः" इषोऽन्नानि इच्छन्तः "अप्नानाः"‖ अशनेन भोजनेन वियुक्ता एव सन्तु। किञ्च। नोऽस्माकं "धियः" कर्माणि देव-विषयाणि स्तोत्राणि+ "सनिषन्तु" देवान् सम्भजन्तु॥

* 'चोदयन्ति'—इति वि०।
† 'नः अस्मान्'—इति वि०।
‡ निघ २,१४,६४।
¶ 'हरयः हरणशीलाः'—इति वि०।
§ 'अर्यः स्वामिनः'—इति वि०।
‖ 'अप्नानाः क्रियाप्रयत्नाः'—इति वि०।
+ 'धियः कर्माणि प्रज्ञा वा'—इति वि०।

अथ द्वयोया।

२१९ ३ २ १ २ २
एषप्रकोशेमधुमाᳶअचिक्रद-
१ २ १२३ १२३ १२
दिन्द्रस्यवज्रोवपुषोवपुष्टमः।
३ १ १ २ ३ १ २ ३ १ २
अभ्यृतस्यसुदुघाघृतश्चुतो
३ १ २ ३ १२ ३ १ २
वाश्राअर्षन्तिपयसाचधेनवः॥ २॥ ९०*

(वासिष्ठम्॥) एषप्रकोशे२। म। धुमाᳶ२।
अचाइक्रा२३४दात्। इन्द्रास्यवाज्रा२ः। पुषो२। व
पुष्टा२३४माः। अभाऋतास्या२। सु। दुघा२ः। घृ
ताश्चू२३४ताः। वाश्राअर्षान्ती२। प। यसा२३।
चधा३इनापूवाई५६ः॥ १२॥ ९०

"देवेषु"—"दिवेषु" इति पाठौ॥ "विचिदश्नाना इषयो अरातयोया नः सन्तु सनिषन्तु नः धिया"—इति छन्दोगाः। "विचिमश्न इषो अरातयोर्यो नः सन्तु सनिषतनो धिया" बह्वृचाः॥ २॥ ८९

* ऋ० ७.३.२,१।

अथ चतुर्थी।

१ १　 १ २ ३ १ २　　 १ २उ

प्रोअयासीदिन्दुरिन्द्रस्यनिष्कृतꣳ

३ २ ३ १२ २२　　 ३ १ २

सखासख्युर्नप्रमिनातिसङ्गिरम्।

"एषः" अयं सोमः "मधुमान्" मधुर-रसः "कोशे" द्रोण-कलशे "प्राचिक्रदत्" प्रकर्षेण शब्दायते। कीदृश एषः? "इन्द्रस्य" "वज्रः" वज्रस्थानीयः बलकरत्वेन वज्रवत् प्रहरण-साधनत्वाद् वज्रत्वोपचारः*। "एषः" एव हि सोमः "वपुषः" वीजानां वप्तुरन्यस्मात् "वपुष्टमः"† अतिशयेन वप्ता। वीजावापस्य सोम-कर्त्तृकत्वात् [सोमो वै रेतोधा इति श्रुतेः]। "ऋतस्य" सत्यफलस्य सोमस्य धारा इति शेषः। ता "अभ्यर्षन्ति" अभि गच्छन्ति‡। कीदृश्यः? "सुदुघः" सुष्ठु दोग्ध्र्यः फलानाम्। "घृत-श्चुतः" उदकस्य रसस्य वा क्षारयित्र्यः "वाश्राः" शब्दयन्त्यः¶। पयसा युक्ता वाश्रा धेनव इव§ लुप्तोपममेतत्॥

"वपुष्टमः"-"वपुष्टरः"—इति, "अभ्यृतस्य" "अभीमृतस्य" —इति, "पयसा च धेनवः"-"पयसेन धेनवः"—इति च छन्दोग-बह्वृचानां पाठः॥ ३ ॥ ९०

* 'पीत बलं येन, समर्थः'—इति वि०।

† 'दीपितारः'—इति वि०।

‡ 'अर्षन्ति चरन्ति'—इति वि०।

¶ वाश्राः कामयमानाः'—इति वि०।

§ 'चरन्ति पयः धेनव आदित्यरश्मयश्च'—इति वि०।

१२ ३ २ ३ १ २ ३
मर्यइवयुवतिभिःसमर्षति

१ २ ३ १ २ ३ १ २ ३ २
सोमःकलशेशतयामनापथा ॥ ४ ॥ ९१ *

२ ३ ५ १ ४
(लौशम॥) प्रोयार३४सीत्। इन्द्रिन्द्रार३। स्या

२ ३ ५ ३ २र ३ ५ १ ४ २ ३
इनिष्कृतम्। सखासख्युः। नप्रमिनार३। तौ३सङ्गि

५ ३ २ ३ ५ १ ४ २ ३ ५ ३र २
रम्। मर्यइव। युवतिभार३इः। सा३मर्षति। सोमः

३ ५ १र २ ४
कला। शेशतयार३। मनाउपा५थाद५ई ॥ १४ ॥

३र ४र र ३ ४ ३ ४ ५ ३ २
(उत्तरलौशम॥) प्रोयासीदिन्द्रुरिन्द्रस्यनिः। कृता

२ १ १ १ १ २ २ ५ ४ ५ र
म्। कृता२३४५म्। सखा३१२३४। सख्युर्नप्रमिना

४ ५ ४ ५ ३ २ ५ ४ ५
तिसम्। गिराङ्गिराम्। मर्या३१२३४ः। इवयुवतिभिः

४ ५ ४ ५ ४ ५ ३र २ ५र ४ ५र
सम। षताइषताइ। सोमा३१२३४ः। कलशेशतया।

३ २ ४
मनाउपा५थाद५ई ॥ १५ ॥

---

१ उ० ४,२,७,१ = ऋ० ७,१,१५,१ = ऋचे ४.१,७—६,२,१०—७,२,११—१७,१,५
—१२.२,१५—१९.२,१८।

(प्रवङ्गार्गवम् ॥) प्रोऽअयासाइन्। इन्दुरिन्द्रा। स्या २निष्कृताम्। सखासख्युः। नप्रमिना। ता २इमङ्गि राम्। मर्यइवा। युवतिभाइः। सा २मर्षताइ। सोमः कला। शेघ्रतया। मा २नापथा२१उ। वा२३४५॥ ॥ १६॥

(तन्त्रम् ॥) प्रोऽअयासाइन्। इन्दुरिन्द्रा। स्या निष्कृता२३म्। सखासख्युः। नप्रामिना। तिसङ्गा २३४इराम्। मर्यइवा। युवतिभाइः। सामर्षतायै३। सोमःकला। शेघ्रातया। मनाऽपा५था६५६॥ १७॥

(यामम् ॥) आ २इ। इयां। प्रोऽअयामाइदिन्दु रिन्द्रा२३। स्या३निष्कृतम्।. सखासख्युर्न प्रमिना- २३। ती३सङ्गिरम्। मर्यइवायुवतिभा२३इः। सा३म

३ ५ १ २ २
र्षति। आ २इ। इया। सोमः कलाशे१शतयार२३।
२ ४
मनाऽ३पा५थाई५ई ॥ १८ ॥ ९१

ऋषिगणऋषिः*। "इन्द्रः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थान मुदरं "प्रो अयासीत्" प्रकर्षेणैव गच्छति। गत्वा च "सखा" सखिभूतः सोमः "सख्युः" इन्द्रस्य "सङ्गिरं" सम्यग्गिरणाधारभूत मुदरं† "न प्रमिनाति" न हिनस्ति। किञ्च। सः "मर्य इव"‡ "युवतिभिः" मर्त्यो यथा तरुणीभिः सह सङ्गतो भवति तद्वत् अय मपि सोमो युवतिभिर्मिश्रणशीलाभिर्वसतीवरीभिरद्भिः सह "समर्षति", सङ्गच्छते अभिषवकाले। स च सोमः "शतयामना" यात्रा अनेकया मनसाधनच्छिद्रोपेतेन "पथा" मार्गेण दशापवित्रसम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः। यद्वैकमेव वाक्यम्। यथा मर्यो युवतिभिः सह सङ्गच्छते एवं कलशे शतयाम्ना पथा सङ्गच्छतेऽद्भिः ॥

"शतयामना"-"शतयाम्ना"—इति पाठौ ॥ ४ ॥ ९१

---

*"सिकतानिवारी"—इति ऋषि-मै०।

† 'सङ्गिरं सुतम्'—इति वि०।

‡ 'निष्कृतं समयायम्'—इति वि०।

¶ 'मर्याः'—इति मनुष्यनामसु एकादशं नैघण्टुकम् २,३। "छन्दसिनिष्टर्क्य (पा० ३.१,१२३)"—इत्यादिना निपातित मर्यइति।

अथ पञ्चमी ।

२ २ ३ १ २ ३ २ ३ १ २
धर्त्ता दिवः पवते कृत्व्यो रसो

१ २ ३ १ २ ३ २ ३ १ २
दक्षो देवानामनुमाद्यो नृभिः ।

१ २ ३ १उ ३ १र २र ३
हरिः सृजानो अत्यो न सत्वभि

२ ३ १ २ ३ १
र्वृथा पाजाᳫसि कृणुषे* नदीष्वा ॥ ५ ॥ ८२ †

२ १ २ ४र
(वात्सप्रिरसो द्वे ॥) धर्त्ता दाइवा३ । ओवा५ए ।

१ २ १ २ ४र २ १ २
पवते कृत्वोइ३यो रासा३ । ओवा५ए । दक्षो दाइवा३ ।

४र ५र २ १ २ ४र २
ओवा५ए । नामनुमाद्योइ३यो नभा३ । ओवा५ए । ह

१ २ ४र २र २ १ २
राइः सार्जा३ । ओवा५ए । नो अतियो ना३ सात्वाभा३ ।

४र २ १ २ ४र २
ओवा५ए । वृथा पाजा३ । ओवा५ए । सिकृणुषाइन

१ २ ५र ४
दाइष्वा३ । ओवा३ए । हो५इ । डा ॥ १८ ॥

* "कृणुते"—इति ऋग्वेदीय पाठः ।

† उ० ४,१,१२,१ = ऋ० ९,७,२,१ = आरण्य १,१,४—१,१,२४—१,१,२६—१,२,२७—१,१,२८ = ऊह ४,१,१४— ८,१,१६—१४,१,१४—१७,१,१०—१९,१,१६—१९,२,१९ = ऊह्य ३,१,१०—८,१,४ ।

धर्त्ता औहोहोहाइ। दिवः। पवतेका। औहो३

हा३। हा। त्वियोरसो। दक्षोदेवा। औहो३हा३।

हा। नामनुमा। दियोनृभाइः। हराइःसार्जा। औ

हो३हा३। हा। नोअनियो। नसत्वभाइः। वृथापा

जा। औहो३हा३। हा। सिक्तणृषा। औहो३हा३।

हाइ। नदीषुवा। औहो३हा३। हा३४। औहोवा।

ए३। नदीषुवा१ ॥ २० ॥ ९२

कविऋषिः*। "धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्तरिक्षस्थितादशापवित्रात् "पवते" पूयते। कीदृशः सोमः? "क्रत्वाः" कर्त्तव्यः शोध्य इत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः†" बलप्रदः। यद्वा। दक्षः प्रवर्द्धनीयो देवाना

* "भार्गवः"—इति ऋति मे०।

† 'दक्षः सोम्'—इति वि०। "दक्षः"—इति बलनामसु पठोदम् नैघण्टुकम् २,९।

अथ षष्ठी।

१ २　३ १ २　　३ २३
वृषामतीनाम्पवतेविचक्षणः

३ १ २　३ १र २र　३ २
सोमो अह्ना*म्प्रतरीतोषसा†न्दिवः।

३ १र　२र ३ १ २　　२
प्राणासिन्धूनांकलशाॅ अचिक्रद

१ २ ३ १ २　३ १ २ ३ १ २
दिन्द्रस्यहार्द्याविशन्मनीषिभिः ॥ ६ ॥ ९३ ‡

मर्याय। तथा "नृभिः" नेतृभिऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न"¶ अश्व इव स यथाभितोऽनसेन गच्छति तद्वत्।."तथा" अप्रयत्नेन "पाजांसि" बलानि§ स्वीयान् वेगान् "कृणुते" कुरुते "नदीषु" ‖ वसतीवरीषु ताभिरित्यर्थः। असिक्त इत्यर्थः। अथ सभिषव-समयाभिप्रायः+ ॥ ५ ॥ ९२

---

* "अक्नः"—इति } ऋग्वेदीय पाठो।
† "उषसो"—इति }

‡ उ० २,१,१०,१ = ऋ० ७,२,१४,५　ऋचे ७,८,१०—९,१,१—१६,१,१७ = ऋचे ४,१,२।

¶ "अत्यः"—इति अश्व-नामसु प्रथमं नैघण्टुकम् १,१४।

§ 'पाजांसि बलानि'—इति वि०। "पाजः"—इत्यन्ननामसु पाठभेदेन तृतीयं नैघण्टुकम् ( २,१ )—बलनामसु च द्वितीयम् ( २,९ )।

‖ 'नदीषु रश्मिषु'—इति वि०।

+ 'सोमोऽस्मादभ्येऽरुणि'—इति वि०।

२ र १ २र १
(ऐडयामम्॥) वृषामातीर२३। नापवातार२३इ।
२ २ २र र १ २ १
ए३। विचक्षणए३। सोभोत्र्याक्षार२३म्। प्रतराईतार
२ १ र २र र १ २र
३। ए३। उषसान्दिवए३। प्राणासाइन्धूर२३। नाक्ष
१ १ १ २ १
लाम्या२३। ए३। अचिक्रददे३। इन्द्रस्याहा२३।
२ र १ २ १ र १
दियावाइआर२३न्। ए३। मनिषिभिरे३४३। ओ२३४५
इ। डा॥२१॥

१ १र र १र २
(याम॥) वृषामतीनाम्पव। ताइवा१इचा२३४।
५ १ १ १ १ १ १र २र १ २र १ २र १ २
। च। णा२३४५ः। सोमोअक्षाम्प्रतरी। तोषा१सा२३४
५ १ १ १ १ १ २र १र १र र १
म्। दि। वा२३४५ः। प्राणासिन्धूनाकल। आ७
२ ५ १ १ १ १ १ १ २ १र
आ१चा२३४इ। क्र। दा२३४५त्। आइन्द्रस्यहार्दि
र १ ५ १ १ १
यावि। आन्मा१ना२३४इ। षिभा२३उ। वा३४५॥ २२॥

१ १ १र २ २ १ २ १र
वृषा२मता२इ। नाम्पवतेविचक्षा२३णाः। सोमो
१ १ २ २ २१र १ १र १
२अह्ना२म्। प्रतरीतोषसान्दा२३इवाः। प्राणा२सि
१र २ २१ २ १ १
न्धू२। नाङ्कलशा९अचिक्रा२३दात्। इन्द्रा२स्यहा२।
१र १ १र २ १
र्दियाविशन्मनोषा२३इभा३४३इः। ओ२३४५इ। डा॥

॥२३॥ ९३

त्रिगण ऋषिः*। अयं "सोमः" "पवते" अभिषूयते†। कीदृशः सोमः? "मतीनां" मतयः स्तोतारस्तेषां‡ "वृषा" वर्षकः कामानाम्। "विचक्षणः" विद्रष्टा¶ "अह्नाम्" उषसां "दिवः" द्युलोकस्यादित्यस्य वा "प्रतरीता" प्रवर्द्धयिता§। किञ्च। "सिन्धूनां" स्यन्दमानाना मुदकानां‖ "प्राणा" [प्रकर्षेण अनिति चेष्टते इति प्राणा] कर्त्ता सोमः "कलशान्" "अचिक्रदत्" धारया अध्वनयत् प्रवेष्टुम्। यद्वा। "सिन्धूनां" [तृतीयार्थे षष्ठी]

* "कविः भार्गवः" – इति ऋषि–नै०।

† पवपाव पु चरते इत्यर्थः।

‡ "मतीनां प्रज्ञानाम्" – इति वि०। "मतयः" – इति मेधावि नामसु च द्वाविंशतितमं नैघण्टुकम् ३,१५।

¶ "विचक्षणः विविध प्रकाशयिता सोमः"—इति वि०।

§ "प्रतरीता प्रकर्षेण तारयिता"—इति वि०।

‖ "सिन्धवः" – इति नदीनामसु एकविंशतितमं नैघण्टुकम् १, १३।

अथ सप्तमी।

१ २ ३१ २ ११ १
त्रिरस्मै सप्त धेनवो दुदुह्रिरे

३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमे व्योमनि।

३ २ ३ १२ ३२ ३ २ ३
चत्वार्य्यन्या भुवनानि निर्णिजे

१ २ ३ २३१२ ३२
चारूणि चक्रे यदृतैरवर्द्धत ॥ ७ ॥ ९४ *

१ ५र ४ ५र ४
( मरुताम्धेनु साम ॥ ) त्रार३४इः। अस्मैसप्तधेन

२ ४ ५ ३ १२ २ १ २
।दुहौ। वोहाइराइ। सत्यामाशिरम्परमाइ। वियो

।म्बुभिरद्भिः "प्राणा" [ प्रा पूरणे ( अ० प० ] पूर्णः "सोमः"

लशात् "अभि" लक्ष्य क्रन्दते। किं कुर्वन्? इन्द्रस्य "हार्दि"

दयम् "आविन्" प्रविशन् "मनीषिभिः" मनसईषित्रीभिः

ःतिभिः सहेति शेषः [यद्वा। व्यवहितमपि मनीषिभिरि-

तत् पवतइत्यनेन सम्बध्यते †॥

"प्राणा"—इति, "क्राणा"‡—इति, "अचिक्रदद्"—"अवी-

शत्"-इति पाठाः॥ ६ ॥ ९३

---

* उ० ६,१,१०,१ = ऋ० ७,२,२१,१ = कवे ८,१,११।

† 'विनियोगोऽस्य तृतीयेऽस्मि'—इति वि०।

‡ क्राणा—इत्यस्य कुर्वाणा इत्यर्थं शोकमो यास्केन न० ४,१९।

१ १र र २ १ १
मानो२ । चत्वार्यन्याभुवना । निर्णिजे२३इ । चा
२ ५ २र१ २र १ २ ४
रूणा२३४इ चा । क्रियदृतैः । आवा२३र्द्धपुनाई५ई ॥२४॥९४

वेणुरूपिः* । "अस्मै" पवमानाय "परमे" उत्कृष्टे "व्योमनि" [ विविधं ओम अवनं गमनं देवाना मत्रेति] व्योमा यज्ञः तस्मिन् स्थिताय । यद्वा । परमे व्योमन्यन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्याम्" यथार्थभूतं "आशिरम्" आश्रयण-साधनं क्षीरादि "दुदुह्रिरे" दुहन्ति [ यद्वा । त्रिःसप्त = द्वादश मासाः—पञ्चर्त्तवः—त्रयइमे लोकाः—अमावादित्य एकविंशइति । एतैः सर्वैः सह गोषु पय उत्पाद्यते तद्गावो दुहन्तीति ] । किञ्च । अयं सोमः "अन्या" अन्यानि चत्वारि "भुवना" उदकानि वसतीवरीस्तिस्रश्चैकधना इति तानि चतुःसङ्ख्यानि† "चारूणि" कल्याणानि "निर्णिजे" निर्णेजनाय परिशोधनाय परिपोषणाय वा "चक्रे" तदा करोति । "यद्" यदा अयम् "ऋतैः" यज्ञैः "अवर्द्धत" वर्द्धितवान् तदा करोति‡ ।

"दुदुह्रिरे" "दुदुह्रे" इति, "परमे"-"पूर्व्ये"—इति च पाठः ॥ ७ ॥ ९४

---

* "वेणामिव"—इति क॰पु॰-मै॰ ।

† वसतीवरीसञ्ज्ञका सपा भाण्डस्थो घटः, एकधन नामकश्च घटः । तत्र वसतीवरी घटोदकेनाभिषुतसोमरसस्य वर्द्धनं भवति, एकधनघटाम्भसा सोमाभिषवं उपयोगः ।

‡ विनियोगोऽस्याभिमर्शने । अस्मै सोमाय । सप्त धेनवः सप्तच्छन्दांसि । त्रिः=प्रातःसवन-

अथाष्टमी ।

१ २ ३ १ २ ३ १ २ ३ १ २ र
इन्द्रायसोमसुषुतःपरिस्रवा
२र ३ १ २ ३ १
पामीवाभवतुरक्षसासह ।
३ १ २ ३ १ २
मातेरसस्यमत्सतद्वयाविनो
१ २ ३ १ ३ १ २
द्रविणस्वन्तइहसन्त्विन्दवः ॥ ८ ॥ ९५ *

---

* उ० ७,१,१०,१ ।

माध्यन्दिन-तृतीयसवनेषु दुदुह्रिरे । अथवा त्रिभिः सवनैः सप्त धेनवः सप्तहोत्रा वषट्कारिणः होता मैत्रावरुणः ब्राह्मणाच्छंसी पोता नेष्टा अच्छावाक आग्नीध्रः । एतेषां वाचः दुदुह्रे । अथवा धेनवः दुदुह्रे सत्या माशिरम् । आग्रयणीयं मिश्रणं वा परमे प्रकृष्टे व्योमनि स्थाने यज्ञे वा । चत्वारि अत्यग्निष्टोम उक्थ्यः षोडशी अतिरात्रश्चतुर्थः । अथवा पृथिवी अन्तरिक्षं द्यौर्दिश इति । अथवा चत्वारो वेदाः । अथवा चत्वारो महर्त्विजः । अथवा चत्वारः समुद्राः । भुवनानि निर्णिजे चतुर्दश भुवनानि सप्त भूरादयो लोकाः सप्त पातालानि तान्यपि चारूणि चक्रे शतवान् । केन प्रकारेण नयतः ऋतैः ऋतैः यज्ञैः सत्यैर्वा अवर्द्धत । अथवा सप्त तस्मै सप्त धेनवः सप्त रश्मयः । दुदुह्रिरे । अथवा सप्ताश्वाः । अथवा सप्त पावकजिह्वाः । सप्त मातरो वा सप्त भूरादयो लोकाः । सप्त पातालानि सप्त सोमसंस्थाः सप्त समुद्राः सप्त द्वीपानि सप्त स्वराः । एता दुदुह्रिरे सप्त । आशिरम् उदकं परमे व्योमनि । चत्वारि अन्याः भुवनानि पृथिव्यादीनि चारूणि चक्रे । यत् ऋतैः यज्ञैः अवर्द्धतेत्यथवा त्रिः अस्मै सप्त धेनवः सप्त प्राणाः शीर्षण्या इति त्रिः उत्पत्ति-स्थिति-प्रलयेषु स सत्याम् अवितथाम् आशिर स्थानं चत्वारि भुवनानि जाग्रत् स्वप्न सुषुप्ति-तुरीयास्तु अर्हतावस्थे नित्याम् नैर्जनैः अवर्द्धत विश्वा-माय'' — इति वि० ।

२ १ २र ४ २ ३
( अपामीवम् ॥ ) इन्द्रा । यसोमसुषुता३ःपा३रिस्र

५ २ १ २र र ४ २र १ २ २र १
व । अपा । मीवाभवतुरा३चा३सामह । मातार् ।

२ ४ २र ३ ५ २१ २
रसस्यमत्सता३दा३यविनः । द्रवाइ । णास्वन्तइह ।

३ २ ४
तुवा३इन्दा५वा६५६ः ॥ २५ ॥

२ १ र ४५ ४५र ४
( वायोरभिदः ॥ ) इन्द्रायसोमसुषुनःपर्यौ ॥ चोइस्रा

५ १ र र र २ २ २ १र र
वा । अपामीवाभवतुरक्षमा१मा३हा । मातेरमस्यमत्स

२ २ २ ३ ५ ३ ५ १ १ ३ २
तदया१वी३नो । द्रा२३४वा । णा२३४स्वी । ताइहसा

१ २ ४
३ । चा२३ । तुवा३इन्दा५वा६५६ः ॥ २६ ॥ ८५

वेनोभार्गवऋषिः । हे "सोम !" त्वं "सु पुतः" सन् "इन्द्राय" तदर्थं "परिस्रव" परितो गच्छ रसं मुञ्च । "अमीवा" रोगः "रक्षसा सह" "मा ते रसस्य मत्सत दयाविनो द्रविणस्वन्त इह" "अप भवतु" अपगतो वियुक्तो भवतु "ते" तव "रसस्य" त्वदीयं रसं पीत्वा "मा मत्सत" मा माद्यन्तु । के ? "दयाविनः" द्वयं सत्यानृतं तेन युक्ताः पापिन इत्यर्थः । किञ्च "इन्दवः" ते रसाः

अथ नवमी।

१ २ ३ १ २ ३ २उ ३ २१
असाविसोमोअरुषोवृषाहरी

१ २१ ३२ ३ १र २र
राजेवदस्मोअभिगाअचिक्रदत्।

३ २उ ३ १ २ ३ १ २ ३१र
पुनानोवारमत्येष्यव्ययꣳश्येनो

२र ३ १ २ ३ १ २
नयोनिङ्घृतवन्तमासदत्॥ ९॥ ९६ *

२ र १ २र १
(यामानि त्रीणि॥) असाविसो। मोअरुषो२३४।

५र ४ २र र १ २र १ ५ ४
वृषाहराइः। राजेवदा। स्मोअभिगा२३४ः। अचिक्र

२ र १र २र १ ५ ४
दात्। पुनानोवा। रामतिया२३४इ। पिअव्ययाम्।

१र र १ २ १ ४ ४
श्यनोनया। निङ्घृतवा२३। तमा५सदात्। चा५इ।

डा॥ २७॥

"इह" अस्मिन्यज्ञे "द्रविणस्वन्तः" अस्माकं धनवन्त "सन्तु" भवन्तु †॥ ८॥ ९५

---

* ऊ० ५,१,१३,१ = ऋ० ७,३,७,१ = ऋवे ५,१,८—८,१,२—१०,१,४—११,१,१०—१२,१,१० = ऋवे १,२,८।

† 'रसवन्तो भवन्तु इत्यर्थो न तु राष्ट्रादीनाम्'—इति वि०।

२ ३ ५ १ २ ५ १र १र २
यासावी२३४सा। मोअद्ध२३४षा:। वार्षाहराये

२ ३ ५ १ २ ५ १र १
३:। राजेवार२३४दा। स्रोअभी२३४गाः। आचिक्रदा

१ ३ ५ १ २ ५ १र १
२३त्। पूनानो२३४वा। रामाती२३४ये। पीअव्यया

२ ३ ५ १ ५ ५ २ २
२३म्। श्येनोना२३४यो। निह्नार्ता२३४वा। तमा३।

१ २ ५र र १ १ १ १ १ १
मा२दा२३४औ होवा। दे३। दिवी२३४५॥ २८॥

४ ५र ४र ५र ४र ५र ४ र ५र ४र
असाविसोमोअरुषोवृषाह। राइ:। राजेवदस्रो

५ ४ र ५ ४ ५ र ४र र ५ ४ ५ र ४
अभिगाअचिक्र। दात्। पुनानोवारमत्येष्यव्य। याम्।

५र ५र र ५ ४ ३ २ १ २ ५र
श्येनोनयोनिह्नृत। वा। तमा३। मा२दा२३४औ

र २ १ १ १ १ १
होवा। ए३। दिवी२३४५॥ २९॥ ९६

भरद्वाजो वसु ऋषिः। "सोमः" "असावि" अभिषुतोऽभूत्।
कीदृशः सोमः? "अरुषः" अरोचमानः* "वृषा" वर्षकः "हरिः"

---

* 'अरुषः अरोचमानः'—इति वि०। "अरुषम्"—इति रूपनामसु पञ्चदशं नैघ-
ण्टुकम् ३,७।

अथ दशमी।

१ २३ २ १२ ३२ ३१
प्रदेवमच्छामधुमन्तइन्दवो

२ १ २३ २३ ३१२
सिष्यदन्तगावआनधेनवः।

३ १२ १ १२ ३१२
बर्हिषदोवचनवन्तऊधभिः

१ १ २ ३ १ २ ३ १२
परिस्रुतमुस्त्रियानिर्णिजन्धिरे॥ १०॥ ९७*

हरितवर्णः† । स च "राजेव" "दस्मः" दर्शनीयः सन् "गाः" उदकानि‡ "अभि" लक्ष्य "अचिक्रदत्" शब्दङ्करोति स्व-रस-निर्गम-समये। पश्चात् "पुनानः" पूयमानः "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि"¶ हे सोम! अतिक्रम्य गच्छसि। ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम् § "आसदत्" वसतीवरीष्वासीदतीत्यर्थः ‖ ॥

"अत्येषि"-"पर्येति"—इति, "आसदत्"-"आसदम्"—इति च पाठः॥ ८॥ ९६

* ऋ० ७,२,१८,१।

† 'हरिः हरणशीलः'—इति वि०।

‡ इव मानं सत्यम्।

¶ 'अत्येषि अत्येति व्यत्ययेन'—इति वि०।

§ "घृतम्"—इति उदकनामसु पठितं नैघण्टुकम् ११२।

‖ 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।

४　५　　११२१११
(मरुतान्वेनु॥) प्रादे। वमच्छामधुम। तश्चा२-
१　　　२१　　५　　११२　१२
इन्दवा:। आसिष्या२३४दा। तगावधा। नधा२इन
१　　१२　　५　　१　१२ ३५
वाः। बर्हिषा२३४दाः। वचनावा२। नऊ२धभाइ:।
१२　　५　　३१२　　　　२
पारिस्रू२३४ताम्। उस्रियानिर्णिजन्धाइरायेरे। धाइ
२　५२ २　　　२　　११११
रा३४औहोवा। धा३इरा२३३५इ॥१०॥९७

वत्स ऋषिः*। "मधुमत्तः" मदकर रस युक्ताः "इन्दवः" सोमाः "देवं" द्योतमानं सोमात्मकम् इन्द्रम् "अच्छ" प्रति "असिष्यदन्त" परिस्यन्दन्ते यज्ञादिषु† प्रसरन्ति। [स्यन्दतेर्लङन्तस्य लुङि चङि रूपम्] तत्र दृष्टान्तः। "गाव आ न धेनवः" पयस्विन्यः प्रीणयित्र्यः गावो यथा वत्सं प्रति पयांसि प्रस्रवन्ति

---

* "वत्सप्रीः भालन्दनः"—इति ऋषि-मे०।

† यज्ञीयदेवानुद्दिश्याग्निष्टोमे सोमा गृह्यन्ते तदाधारत्वात् दारुपात्रविशेषा अपि ग्रहा उच्यन्ते। ते च प्रातःसवने, पञ्चविंशति-संख्याका भवन्ति। तथाहि—१ उपांशुः—२ अन्तर्यामः—३ ऐन्द्रवायवः—४ मैत्रावरुणः—५ आश्विनः—६ शुक्रः—७ मन्थी—८ आग्रयणः—९ उक्थ्यः—१० ध्रुवः—११-२३ ऋतुग्रहाः द्वादश—२४ ऐन्द्राग्नः—२५ वैश्वदेवश्चेति। माध्यन्दिनसवने चत्वारि—तत्र, माहेन्द्रीयाख्यो माहेन्द्रश्च चतुर्थः। तृतीयसवने तु पञ्च, तथाच—१ आदित्यः—२ सावित्रः—३ महावैश्वदेवः—४ पात्नीवतः—५ हारियोजनश्चेति।—इत्थं चतुस्त्रिंशत् ग्रहाः सन्तीति।

अथैकादशी ॥

१ २ ३क२र ३ १ २ ३
अञ्जतेव्यञ्जतेसमञ्जते

१ २ ३२ ३क २र
क्रतुꣳरिहन्तिमध्वाभ्यञ्जते।

१ २ ३ २३१२ ३ १ २
सिन्धोरुच्छ्वासेपतयन्तमुक्षणꣳ

३२ ३ २ ३ १ २
हिरण्यपावाःपशुमप्सुगृभ्णते ॥ ११ ॥ ९८ *

२ १ २ १ २
(भार्गाणि त्रीणि॥) अञ्जताइ। वियञ्जताइ। सम

१ १ २र १ २ १
-ञ्जाता२इ। क्रतुꣳरिहा। तीमधुवा। भियञ्जाता

तद्वत्। किञ्च। "बर्हिषदः" बर्हिषि सीदत। "वचनवन्तः" हम्भा-रवादि-शब्दवन्तः [उस्रियेति गोनाम†] तादृश्यो गावः ऊधभिः पयआधारकैः स्वैः स्वैरूधोभिः तेभ्यः "परिस्रुत" परितः स्रवणशीलं "निर्णिजं" शुद्धं पयोभूतं सोमरसं "धिरे" दधिरे इन्द्रार्थं धारयन्ति ॥ १० ॥ ९७

---

* उ० ७,१,११,१ = ऋ० ७,३,२०,२ = ऋग्वे १२,१,१०।

† "उस्रिया"—इति गोनामसु पठितं नैघण्टुकम् २,११।

२१ २र१ २ १
२इ। मिन्धोरुच्छ्वा। सेपतया। तमुत्ताणा२म्। धिर

१ १र १ १र १ २ ११११
एयपा। वाःपुमा। एसगृभ्णता२१उवा२३४५॥ ३१॥

३ २ १ २ १ २ ४ २ ३ ५
अञ्जा३हो। ते३हाइ। वियञ्जते३सा३मञ्जताइ।

२ २ १ ३ २ १ २ ४ २ ३ ५
क्रतू३ (९)हाइ। रिहा३हो। तिमधुवा३भी३मञ्जताइ।

३ २ १ ३ २ १ २र ४ ३ २ ५
सिन्धो३र्होइ। उच्छ्वा३हो। सेपतया३न्ता३मुत्तणाम्।

३ २ १ ३ २ १ २र ३ २ ४
हिरा३हो। एयपा३हो। वाःपशुम्। एसुगा३र्भ्णा५

ता६५६इ॥ ३२॥

४ ५ १ ३४५ र३४५ र १ ३ २
हावाञ्जा। ता२३४इ। वियञ्जतेसमञ्जते। एहिया।

१ ३ २ ५ १ ३४र३
एहिया३४। हाउक्रातूम्। रा२३४इ। 'हंन्तिमधुवाभि

४ ५र १ ३ २ १ ३ २ ५ १
यञ्जते। एहिया। एहिया३४। हाउमाइन्धोः। उ२

३र र ४३४५ १ ३ २ १ ३ २
३४त्। श्वासेपतयन्तमुत्तणाम्। एहिया। एहिया३४।

अथ द्वादशी।

२ १ २ १ १ २
पवित्रन्तेविततम्ब्रह्मणस्पते

१ १र २र ३ १ १ १ १ २
प्रभुर्गात्राणिपर्येषिविश्वतः।

५ १ २ १र ४ ३ ४ ३ ४ ५ २ १ १
हाउहाइरा। एया२३४। पावाःपशुमपस्तुगृभ्णाते। एहि

२ १ २ २ ५ ४
या। एहिया३४। हाउ। वो५इ। डा॥ २२॥ ९८

अविक्तऋषिः*। सोमम् ऋत्विजः "अञ्जते" गोभिः तथा "व्यञ्जते" विविध मञ्जति "समञ्जते" सम्यगञ्जति। स्तुत्यर्थत्वादपुनरुक्तिः † तथा "क्रतु" बलकर्त्तारं "रिहन्ति" लिहन्ति आस्वादयन्ति देवाः तथा पुनः "मध्वा" मधुना गव्येनाभ्यञ्जते। तमेव सोमं "सिन्धोः" उदकस्य रसस्याधारभूते "उच्छ्वासे" उच्छ्रिते देशे "पतयन्तं" गच्छन्तं [पतॢ गतावित्यस्मात् स्वार्थिके णिचि हस्वाभावश्छान्दसः] "उक्षणं" सेक्तारम् "हिरण्यपावाः" हिरण्येन पुनन्तः "पशु" द्रष्टारं ‡ [पशुः पश्यतेरिति निरुक्तम्] "अप्सु" वसतीवरीषु "गृभ्णते" गृह्णन्ति ¶॥

"मध्वा"-"मधुना"—इति, "अप्सु"-"आप्सु"—इति च पाठः॥ ११॥ ९८

---

* "भौमः"—इति ऋषि-मै०।

‡ पुनरुक्तिदोषो नेति भावः।

† 'पशुं सोमम्'—इति वि०।

¶ 'विनियोग उपरवे प्रयम्यं च'—इति वि०।

११　१२उ　१　१　१
अतप्ततनूर्न तदामो अश्नुते

२　२　२१र　२१　१र　२र
शृतास इद्वहन्तः सन्तदाशत ॥ १२ ॥ ९९ *

॥ द्वितीय-दशति ॥

(अर्कपुष्पम् ॥) पवित्रन्ते विततम्ब्रह्मणस्पते३ । ऊवे
२३ । २ । होवा३हा३ । हाइ । प्रभुर्गात्राणिपर्य्येषि
विश्वता२३ः । ऊवे२३ । २ । होवा३हा३ । हाइ । अत
प्ततनूर्नतदा२मोअश्नुते३ । ऊवे२३ । २ । होवा३हा३हा
इ । शृतासइद्वहन्तःसन्तदा२शत । ऊवे२३ । २ । हो
वा३हा३ । हा३४ । औहोवा । अर्कोदिवाना२म्परमेवि
यो२मा२३४५न् ॥ ३४ ॥

(अर्कपुष्पोत्तरम् ॥) पवित्रन्तेविततम्ब्रह्मणस्पते३ ।

* ऋ० ९,८३,१ = य० ७,३,८,१ = आरण्ये १,१,११—१,१,१९—कवे ०,२,१ —०,२.२ –१४,१,१ = ऊहे १,१,८—४ १,१ ।

१ २र १ १ र २र १ २र १
ऊवाइ। औहोवा२। प्रभुर्गात्राणिपर्येषिविश्वता२३:।

१ २र १ १ २ र१ ३र १र २ १
ऊवाइ। औहोवा२। अतप्ततनूर्नतदा२मोअश्नुते३। ऊ

२र १ १र ११ २ १ ३र
वाइ। औहोवा२। श्रृतासइद्वहन्तःसन्तदा२शत।

१ १र १ २ ५र र २ १ २
ऊवाइ। औ। होर२। वा२३४। औहोवा। अर्कस्य

र १र २ १र ३र २ ११११
देवाःपरमेवियो२मा२३४५न्॥ ३५॥ ९९

॥ इति ग्रामे गेये षोड़शः प्रपाठकः॥

पवित्रऋषिः*। हे "ब्रह्मणस्पते" मन्त्रस्य स्वामिन्! सोम! "ते" "पवित्रं" शोभन मङ्गं "विततं" सर्वत्र विस्तृतम्। स "प्रभुः" प्रभविता त्वं "गात्राणि" पातुरङ्गानि "पर्येषि" परिगच्छसि। "विश्वतः" सर्वतः तव तत्पवित्रम् "अतप्ततनूः" पयोव्रतादिना असन्तप्तगात्रः† "आमः" अपरिपक्वः "नाश्नुते" न व्याप्नोति। "शृतासः ‡ इत्" शृताएव परिपक्वाएव "वहन्तः" यागं निर्वहन्तः तत् पवित्रं "समासत" व्याप्नुवन्ति ¶॥

---

* "आङ्गिरसः"—इति ऋषि-नि०।

† 'असन्तप्तशरीरः शुक्रैरपि छिद्रैः इत्यापवित्रस्य'—इत्यादि वि०।

‡ 'शृतासः निष्पन्न-सोमाः'—इति वि०।

¶ व्याप्नुवन्ति दोषकलमम्'—इति वि०।

"समदायत"-"ततसमासत"—इति पाठौ* ॥ ६ ॥ ९९

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे
छन्दोव्याख्याने पञ्चमस्याध्यायस्य नवमः खण्डः ॥

॥ इति आगतम् ॥

—:○:—

इन्द्रमच्छेतिखण्डेऽस्मिन् ऋचो द्वादश संस्थिताः ।
सकला उष्णिहस्तत्र वक्ष्यन्ते ऋषयः पृथक् ॥

तत्र दशमे खण्डे—

सैषा प्रथमा ।

२ ३ १ २ ३ १ ३ १र २र ३ १ २
इन्द्रमच्छसुताइमेवृषणंयन्तुहरयः ।
३ २ ३ २ ३ १ २ ३ १ २
श्रुष्टे†जातासइन्दवःस्वर्विदः ॥ १ ॥ १०० ‡

(पदे द्वे ॥) इन्द्रमच्छा । सुताइमा । यौवो२३४वा ।

---

* तत्रस्थाधारितो वंशपरम्पराय विशेषा मध्येऽथमेव मन्त्रः यतोरे मन्त्र-पक्षा-न्तरतत्र ; तथाच "समदायत" इत्युच्चारितैः न नष्टा तनः प्रथमा च पुरुषः "सामः" अपरिपक्वः समस्तन्तः अतएव "सम" प्रसिद्ध केवलं "न समतं" इत्यर्थः । अस्यानोऽस्य विनियोगो ज्योतिष्टोम-तृतीयेऽहनि ।

† "श्रुष्टी"—ऋ० ।

‡ उ० १,१,१०,१ = ऋ० ७,५,८,१ = अथर्वे १,१,१०—२,१,७—६,१,१०—६,२,८—९,१,१० — १०,१,१६—१०,२,१ —१२,२,१०—१३,१,१—१२,१,१०—१४,१,११—१४,१,१०।

१ २ १ ० २ ३ र ५ २ १ २ र १
वृषणंय। तूच्चरया। औ३हो२३४वा। ग्रुष्टाइजाता।

२ ३ २ १ २ १ २ १
सइन्दवाः। सुवर्वा२३इदा३४३ः। ओ२३४५इ। डा॥१॥

५ २ १ २ १ २ २ १
इन्द्रमच्छा। सुताइमा३इ। ताइ३माइ। वृ

२ १ ० १ १ १ र र ३र १
षणंय। तूच्चरया२ः। धारा३याः। अ्रुष्टेजाता३सा

० १ २ १ १ २ ५र र
इन्दवा२ः। आइन्दा३वा३ः। सुवरा३४। औहोवा।

२ र १ १ १ १ १
विदोवौ३दा२३४५ः॥ २ ॥

४ ५ ४ १ १ २
(अनुपदे द्वे ॥) इन्द्रम्। इन्द्राम्। अच्छा३सुता

१ १ २ १ ० १
१इमे२। आइमे२। वृषणंय। तूच्चरया२ः। राया

र र ३र ० १ १ २
२ः। अ्रुष्टेजाता३साइन्दवा१ः। दावा२३ः। सुवरा

५र र २ १ १ १ १ १
३४। औहोवा। विदो३विदा२३४५ः॥ ३ ॥

३ ४ २ ४ ३र ४ ३र ४ ५ २ १ २ ३
इन्द्रमच्छसुताइमेवृषणंयन्तुचा। हो३४३। रयश्रा।

अथ द्वितीया।

१२ ३१ २ ३१२ २१२
पुधन्वासोमजागृविरिन्द्रायेन्दोपरिस्रव।

२३१ २३१२ ३१२
द्युमन्तꣳशुष्ममाभरस्वर्विदम् ॥ २ ॥ १०१ *

१ २ १ २ ३ ४ ५ १
असृग्राउवा। जाताउवा३४। मइन्दवःसुता। हो।

१२
विदओ२३४५इ। डा ॥ ४ ॥

२१२ ४ ५ १ २ ५
(पौष्कलम् ॥ इन्द्रमा३च्छसु। ताई२३४माइ।

२ १ २१ २ १ ५ ३१ २ २
वृषाणंया। नूर्धारा२३४याः। असृग्राइजाता। मइ२

२ २ १ २ १ १ १ १
न्दा२३४५वाई५६ः। सुवर्विदा२३४५ः ॥ ५ ॥ १००

असितो वा काश्यप ऋषिः। "असृग्रन्" सृष्टा क्षिप्रं "जातासः" जाताः "इन्दवः" पात्रेषु चरन्तः "स्वर्विदः" सर्वज्ञाः† "हरयः" हरितवर्णाः "सुताः" अभिषुताः "इमे" सोमाः "वृषणं" कामानां सेक्तार मिन्द्रम् "अच्छ यन्तु" अभि गच्छन्तु ॥ १ ॥ १००

* ऋ० ७,५,१९,४ = ऋग्वे ११,१०,१।

† 'स्वर्विदः सर्वं लोकं विदन्ति'—इति वि०।

१ १२ २ २
( ऐषिराणि पञ्च ॥ ) प्रधन्वासौहोइ। औ३होर३४
५ १ १२ १ २ १२ २ २ ५
वा। मजागृविः। इन्द्रायेन्दौहोइ। औ३होर३४वा।
१ २ १ २ १ ५ १ १२
परिस्रव। द्युमन्तꣳऔहोइ। औ३होर३४वा। अमा
२ १२ २ २
भर। सुवर्विदौहोइ। औ३होर३४५वा६५६। ऊ२३
५
४पा ॥ ६ ॥

२ १२ २ २ १ २ २ १ २ १२
प्रधन्वासौहो। वा३हो। मजागृवी२ः। इन्द्राये
२ २ १ २ १ १ २
न्दौहो। वा३होइ। परिस्रावा२। द्युमन्तꣳऔहो।
२ १ २ २ १ १२ २ १
वा३हो। अमाभारा२। सुवर्विदौहो। वा३होर।
५ ५२ २ २ ५
वार३४औहोवा। ऊ२३४पा ॥ ७ ॥

१२ १२ २ १ २ १२ २ २ १
औहौहोइ। प्रधन्वासो२। औहौहो। मजागृ
२ १२ २ २ १ २ १२
वी२ः। औहौहोइ। इन्द्रायाइन्दा२। औहौहोइ।
२ १ २ १२ २ १ २ १२
परिस्रावा२। औहौहोइ। द्युमन्ताꣳम२। औहौहो।

२ र १  र १र  २  २  २
ष्ममाभारा२। श्रौहौहोइ। सुवः। वार२इ। दार२३४।
५र र  ५
औहोवा। ऊ२३४पा॥ ८॥

१ १ १ १ २ १
ऊवा२इ। ऊवा२इ। हुवा२३होयि। प्रधन्वासो
र १ र १ १
२। मजागृवी२ः। इन्द्रायाइन्दा२। परिस्नावा२।
१ र १ १
द्युमन्ताऽश्मु२। ष्ममाभारा२। सुवर्वाइदा२म्।
१ १ १ १ २ ५र र
हुवा२इ। हुवा२इ। हुवा२३होर। वा२३४औहोवा।
२ ५
ऊ२३४पा॥ ९॥

११ ४र ५र १ २ ५ १
प्रधन्वा२३सोमजागृवीः। इन्द्रा२या२३४इन्दो। श्रोइ।
२ १ २ २ १ २ ५ १ ०
पा३राइस्रा३वा। द्युमा२न्ता२३४ऽश्मु। श्रो। ष्ममा
२ १ १ १ १ १
भा२३४५रा६५६। सुवर्विदा२३४५म्॥ १०॥ १०१

चक्षुर्मानवऋषिः। हे "सोम!" "जागृविः" आगरण-
शीलस्त्वं "प्रधन्व" प्रक्षर। हे "इन्दो" सोम! "इन्द्राय" "परि

अथ तृतीया।

१ २ ३१ २ ३ २ ३ १ २
सखाय आ निषीदत पुनानाय प्रगायत।
३ १ ३ १र २र ३ १
शिशुन्न यज्ञैः परिभूषत श्रिये॥ ३॥ १०२*

(औक्त्थानि पञ्च॥) सखा३या आ २। निषीदता।
पुनाना२३या। प्रगायता। शिशुन्ना२३या। ज्ञैः परा
इभू२। षता आ२३या३४३इ। ओ२३४५इ। डा॥ ११॥

साखायाआ। निषीदा२३४ता। पुना२ना२३४या।
प्रा२गा२३४औहोवा। या२३४ता। शिशून्नया। ज्ञैः प
रिभूर३। षा२ता२३४औहोवा। श्रिये१॥ १२॥

स्रव" परितः पात्रेषु चर। किञ्च "द्युमन्तं" दीप्तियुक्तम् †।
"स्वर्विदं" सर्वस्य लम्भकं "शुष्म" शत्रूणां शोषकं बलम्‡
"आभर" आहर॥ २॥ १०१

---

* उ० ४,२,९,१ = ऋ० ७,५,७,१ = ऊहे २,१ १—१,१,२—७,१,१८—७,१,१९—
९,१,१८—१४,१,२५।

† "द्युमत्"—इति दीप्ति कर्मसु पाठितमं नैघण्टुकम् १,१६।

‡ "शुष्मम्"—इति बलनामसु एकादशं नैघण्टुकम् २,९।

४ ५र ४र　　५र ५　　१ २ १र र

सखायआनि । षीदाईता । पुनानायप्रगायाता ।

र　　१र २ १ १

ग्निष्टुन्नयज्ञैःपरा २इ । भूषा२३ता३ । आ२३या३४३इ ।

१

ओ२३४५इ । डा ॥ १३ ॥

५र र　　४ ५र ४र　　५र　　५ १ र १र

ओहाइ । सखायआनि । षीदाईता । पुनानौहाइ ।

२र १र ५　　४ ५ ४　　१र १ र　　१र १ र　　१

पुनानौहोयेइ । यापायापा । गायतौहोइ । गायतौहोयेइ ।

४ ५ ४ ५　　२ १ र　　२ १ र　　१　　४ ५

ग्राइग्रू९ग्राइग्रूम् । नयज्ञौहोइ । नयज्ञौहोयेइ । पारी ।

२ १　　५र र　　२　　२र　　२ २

पारा३४औहोवा । ए३ । भूषतग्निये१ ॥ १४ ॥

५ र　　१ २ १　　५　　२ १　　२ १　　५

सखा । यआओ२३४वा । निषाइ । दाताओ२३४वा ।

१ र १र　　२र　　१　　२ १　　५　　१ र

पुनानायप्रगा२यत । ग्राइग्राओ२२४वा । नयज्ञैःपरि

२　　१ २ १　　५　　२

भूइ । षाताओ२३४वा । श्रिये१ ॥ १५ ॥ १०२

पर्वतनारदाद्यमौ* । हे "सखायः" सखिभूताः ! "स्तोतारः"

---

* पर्वतो देवः काश्यपिः, नारदश्च मैत्रावरुणी चपयस्यः इति ऋषि-भेदेन-भाष्यः ।

अथ चतुर्थी।

१ २ ३ १ २ ३ २३ १ २
तंवःसखायोमदायपुनानमभिगायत।

३ २ ३१ २ ३ १ २
शिशुन्नहव्यैःस्वदयन्तगूर्त्तिभिः॥ ४ ॥ १०३ *

२ ५ २
(कार्ण्श्रवसानि त्रीणि॥) ता२३४०वः। सा२३४

५ २र १ २ १ र २ १र २
खा। योमदा२३या। पूनानम। भिगाया२३ता।

१ २ १ २ २र २१ २३र २ १
आइशाशुन्नह। व्यःस्वदया२३। तङ्गूर्त्तिभा३४३इ। ओ२

३४५इ। डा॥ १६ ॥

•

ऋत्विजः "आ नि षीदत" स्तोतु मुपविशत। अथ "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत ततः अभिषुतं सोमं "यज्ञैः" यजनीयैः हविर्भिः मिश्रितैः "श्रिये" शोभार्थं "परिभूषत" परितोऽलङ्कुरुत। तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितरः † आभरणैरलङ्कुर्वन्ति तद्वत् ॥ २ ॥ १०२

---

* उ० ४,१,१९,१ = ऋ० ५,८,१ = ऊहे ३,२,१२—७,१,१०— ८,१,११—९,२, १०—१८,१,२।

† 'मातरः'—इति वि०।

१ २ ३ ४ ५　२र १　२ ५ १　५　१ र
ओइतंवःसखा। योम। दायाओ२३४वा। पुना

१ ५ २ २ ५ १ २ १ ५
नमभिगा३। आ। ओ२३४वा। यताओ२३४वा।

१ २ १ २ १र २ २ ३ ५ २ २
शिशुन्नच। व्यैःस्वदया३। आ। ओ२३४वा। तगा

२ ५ ३ ५
ओ२३४वा। तौ२३४भीः॥ १७॥

५ र र ५ २ र १ ३र १
तंवःसखायोमदाइया। पुनानमभिगा२यत। शा

७ २ ५र ५ ३ २ १ ४ २
इशुन्नचा३। व्यैःस्व। दया३। ता२३गू३। ता३४५इ

५
भोइवाइ॥ १८॥ १०३

पर्वतनारदावृषी। हे "सखायः!" ऋत्विजः "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं "तं" सोमम् "अभिगायत" अभिष्टुत। तमिमं सोमं "शिशुं न" शिशुमिवालङ्कारैः क्षीरादिभिश्चालङ्कुर्वन्ति तद्वत्। "हव्यैः" हविर्भिर्मिश्रयणैः "गूर्त्तिभिः" स्तुतिभिश्च * "स्वदयन्त" स्वादूकुरुत।

"हव्यैः"-"यज्ञैः"—इति पाठौ॥ ४॥ १०३

---

* गूर्त्तिभिरिति अर्चति कर्मणो (नै०३,१४) गूर्धंतेः रूपमिदम् भाष्यकारस्य। 'गूर्त्तिभिः उद्यमानै रन्नैर्मन्त्रैः'—इति वि०।

अथ पञ्चमी।

३ १२ २र३ १ २ ३ २ ३ १ ३ १ २
प्राणाशिशुर्म्महीनाꣳहिन्वन्नृतस्यदीधितिम्।
३ १ २ ३ १ २३ १ २ ३ २
विश्वापरिप्रियाभुवदधद्विता ॥ ५ ॥ १०४*

४ ५ २ ५ १ २
(वाचः सामनी द्वे ॥) प्राणा। शा३३४इशूः। मही
५ १ ३ ५ २ १ २ २
२३४इनाम्। हिन्वा२ना२३४न्ता। स्या३दाइधी३तीम्।
१ २र १ २२र २ १ २ १ २ १
वाइश्वापरि। प्रियाभुवा२३त्। अधद्विता३४३। ओ२३
४५इ। डा॥ १८॥

४ ५ ४ ५ १ १ ५ २
प्राणाप्राणा। शाइशु२ःशाइशूरः। मही३१उवाये३।
१ १ १ १ २ १ १ २
ना२३४५म्। हिन्वन्नाꣳस्यदा३१उवाये३। धी२३४
५ १ २ २ ५ २
तीम्। विश्वापारिप्रिया३१उवा२३। भू२३४वात्। अधौ
१ २ १ ३ ५२ २
२। वौ२। ऊवाये३। द्वा२इता२३४औहोवा।
२ ५
ऊ२३४पा ॥ २० ॥

* ऋ० ९,१,१०,१ = अ० ७,५,४,१ = ऊह्ये १,१,१२—४,१,२—७,१,१०—७,२,२१—८,१,१४—८,१,१—११,१,५—१४,१,८—१६,१,८।

(इन्द्रसामनी द्वे ॥) प्राणाग्निर्गूः। मघाऽ२इनाम्। औहोइवा। चिन्वन्नतस्यदीधितिम्। वाइम्वाउवा। पाराउवा। प्रियाऽ२भुवत्। अधाउवा३। ए३। हिता१ ॥ २१ ॥

प्राणा। हो३इ। इयाहाइ। शाइशुर्महाइ। ना२३म्। आउहाउ। हो३वा। चिन्वन्नतस्यदीधिता२इम्। आउहाउ। हो३वा। विश्वापा। र्याउहाउ। हो३वा। प्रिया२३। भूरवा२३४औहोवा। अर्धहिता१ ॥ २२ ॥

(मरुतां प्रेङ्खम्॥) प्राणा। हवोइ। शा२३४इशूः। हवो३इ। मघोना२३म्। होवा३होये३४। चिन्वन्। हवोइ। आ२३४र्ता। हवो३। स्यदीधिता२३इम्।

१ १ १ १ ५ र २ १ १ ५ १ २
होवाइहोयि३४। विश्वा। हहोइ। पा२३४री। हहो

२ १ १ १ ४
३इ। प्रियाभूवा२३त्। होवा३होये३। आ२३धा३।

२ ५
हा३४५इतोईहाइ ॥ २३ ॥ १०४

त्रितऋषिः*। "प्राणा" यज्ञं कुर्वाणा इत्यर्थः †। "महीनां" महतीनां मंहनीयानां वा अपां ‡ "शिशुः" स्थानीयः सोमः ¶ "ऋतस्य" यज्ञस्य "दीधितिं" दीप्तिमन्तं प्रकाशकं वा स्वीयं रसम् "हिन्वन्" प्रेरयन् §। "विश्वा" सर्वाणि "प्रिया" प्रियाणि हवींषि "परि भुवत्" परिभवति व्याप्नोति। अपि च "द्विता" द्विधा भवति ||। दिवि पृथिव्यां च वर्त्तत इत्यर्थः। +

"प्राणा"-"क्राणा"—इति पाठः ॥ ५ ॥ १०४

---

* "आप्त्यः"—इति ऋषि नि०।

† भाष्यकारस्तु क्राणाइति ऋग्वेदीयपाठमनुसृत्यैवं व्याख्यातवान्; तथाच यास्कः—"गोभिः क्राणा अभूषत—गोभिः कुर्वाणा अभोषत"—इति ४,१९। सामवेदीय-पाठस्तु प्राणाइति अतएव 'प्राणभूताः'—इति विवरण-व्याख्यानम्।

‡ 'गवाम्'—इति वि०।

¶ 'शिशुः प्रंसनीयः—इति वि०।

§ 'आप्नुवन्'—इति वि०।

|| 'द्वैतवर्णा सोमदेवता एव'—इति वि०।

+ 'विनियोगोऽस्य षष्ठेऽहनि'—इति वि०।

अथ षष्ठी ।

१२ २१२ ३१२ १२ ३१२
पवस्वदेववीतयइन्दोधाराभिरोजसा ।
२३ १ २
आकलशम्मधुमांत्सोमनःसदः ॥ ६ ॥ १०५ *

१ ४ ३ २ ३ ५
(प्राजापत्ये द्वे ॥) पवस्वदा२इ । ववीता२३४याइ ।
१ २र २ २ ३ ५ १र
आइन्दोधारा२ । भिरोजा२३४मा । आकालशाम् ।
२ ३ ५ १ १र१ ४ ४
माधूमा२३४०त्सो । मनएमाना२३ः । सदा५ए । हो५
इ । डा ॥ २४ ॥

५ २१र र २ र
पवस्वदा । ववीतयाइ । इन्दोधा२३रा३४ । भिरो
५ ५ १ २ २ १ १ २ २
जसा६ए । आका३वा । लाशा २म् । माध३वाइ ।
१ २१ ५ ४ ५
मांत्सो२३ । मनो२३४वा । सा५दो५वाइ ॥ २५ ॥ १०५

मनुर्ऋषिः † । हे "इन्दो". सोम ! "देववीतये" देवानां भन-

---

* ऊ० ५,१,१७,१=ऋ० ७,५,१०,४=कर्द५,१,१७—११,३,१९—९,१,४—१४,१,१७ ।

† "आप्सवः"—इति ऋषि-जै० ।

अथ सप्तमी।

१ २ ३ १२ ३ १२ ३ १२ १ २
सोमः पुनानऊर्म्मिणाव्यंवारंविधावति।

१ २ ३ १२ २२ ४ ३ १ २
अग्रेवाचःपवमानःकनिक्रदत् ॥ ७ ॥ १०६ *

५२ २ २ १ २
(सुम्नाने द्वे ॥) सोमःपुना। नऊर्मिणा। अव्यं

१ २ १ २ २ १ १
वारा२म्। विधावताइ। अग्रेवाचा२ः। पव। मा२

३ ५२ २ १ २ २ १ ३ ११११
२नार२३४औहोवा। कनिक्रदद्देउपा२३४५ ॥ २१ ॥

५२ २२ १ २ १ ३ ५२
सोमःपुना। नऊर्मिणोवा३। ओ२। वा२३४। औ

२ १ २ १२ ३ १ १ १ १
होवा। अव्यंवारंविधावति। अग्रे३। होवा३। हो

णाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" क्षर। हे "सोम" "मधुमान्" मदकररसवांस्त्वं "नः" अस्मदीयं "कलशं" द्रोणाख्यम् "आसद" आसीद। [सदेलक्लिरूपम् † ॥ ६ ॥ १०५]

* उ० ३,१,१८,१=ऋ० ७,५,१०,५=ऋवे ९,२,१७—७,२,९—९,३,४—१५,२,११।

† 'विनियोगोऽस्य नवमऽवत्'—इति वि०।

२ ५र र २र१ १र १ १
२ । वा२३४ । औहोवा । वाचःपवमानः । कनाह् ।

१ २ १ २ ५र र २ ५
होवा३ । हो२ । वा२३४ । औहोवा । का२३४दात् ॥२७॥

४र५ र ४ १ र
(द्यौते द्वे ॥) सोमःपुनानऊ । मिणा । अव्यवार-

२ १र २ १ र र २ १ र २ ४ ५
विधावा२३ती । अग्रे वाचाः । पवमानाः । का३निक्र ।

११११
दा२३४५ुत् ॥ २८ ॥

१र र र २ ५र २ र र १
सोमःपुनानऊर्मिणा२३४ऐह्री । अव्यंवारंविधावता

५र २ र र र २ ५र ४ ५ २
२३४ऐह्री । अग्रेवाचःपवमाना२३४ऐह्री । कानी । क्र

५ ५
ददे३४ । प्रियाइह्रा । हो५इ । डा ॥ २९ ॥

१र४ ५र १र ३ ५
(आतीषादीये द्वे ॥) सोमःपुना । नऊ३र्मी२३४णा ।

१ १र १ २ १ २ २ ५
अव्यंवारम् । विधावति । अग्रा३२इ । वा२३४चाः ।

१ २ २ ५ २ २ ४
पवा३२ । मा२३४नाः । कना३इक्रा५दाइ५ईत् ॥ ३० ॥

अथाष्टमी ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
प्रपुनानायवेधसेसोमायवचउच्यते ।
३ १र २र ३ १ २ ३ १ २
भृतिन्नभरामतिभिर्जुजोषते ॥ ८ ॥ १०७ *

३र ४ ५ र २ १ ४र ५ ५ १ र २
सोमःपुना । द्दो । नऊर्मिणा६ए । अव्यंवारविधा
र २ २ २ १ १ १ १ २ १ २
१वा३ती । अग्रेवा२३४५ । चा२३४५ः । पवमा२३ना३ः ।
१ २ ५र र २ ३ १ १ १ १
का२ना२३४औहोवा । क्रदरदे२३४५ ॥ ३१ ॥ १०६

अग्निर्ऋषिः † । "पुनानः" पूयमानः "सोमः" "ऊर्मिणा" स्वीयया धारया "अव्यम्" अविभवं "वारं" वालं पवित्रं "विधावति" विविधं गच्छति । कीदृशः ? "पवमानः" पूतः "वाचः" स्तोत्रस्य "अग्रे" "कनिक्रदत्" पुनः पुनः शब्दं कुर्वन् विधावति ‡ ॥

"अव्यम्"—"अव्यः"—इति साम्न ऋचः पाठः ॥ ७ ॥ १०६

* ऋ० ७, ५, ६, १ ।

† "चाक्षुषः"—इति ऋषि-मै० ।

‡ दाधर्त्ति दर्धर्षीत्यादिना ( पा० ७, ४, ६५ ) सिद्धम् ।

¶ 'विनियोगोऽस्य चतुर्थेऽर्थवनि'—इति वि० ।

(सोमसामानि चत्वारि॥) प्रपुना२३नायवेधसाइ।

चोइ। चोइ। सोमायवचाउच्याता२इ। भृतिन्नभरा

मतिभा२इः। जुजोषा२३ना३४३इ॥ ओ२३४५इ। डा

॥ ३२॥

प्रपुनानौचो५यवेधमाइ। सोमाओ३चो३४। यव

चउच्यताइ। भृताओ३चो३४। नभरामतिभाइः। जु

जा३१उवा२३। षा२३४ते॥ ३३॥ १०७

द्वितो नाम ऋषिः* स्वात्मानं प्रत्याह। "पुनानाय" पवित्रेण पूयमानाय † "वेधसे" कर्मणां विधात्रे सोमाय‡ "वचः" स्तोत्र-लक्षणं "प्रोच्यते" त्वया प्रोच्यताम्। किञ्च। "मतिभिः" स्तुतिभिः "जुजोषते" प्रीयमाणाय स्तुतिं "प्रभर" प्रकर्षेण धारय। तत्र दृष्टान्तः। "भृतिम्" यथा भृतकाय भृतिं सम्पादयति तद्वत्।

"वच उच्यते"-"वच उद्यते"—इति साम्न ऋचः पाठः।

॥ ८॥ १०७

---

* "आप्त्यः"—इति ऋषि मै०।

† 'सोमपानाय'—इति वि०।

‡ 'मेधाविने सोमाय'—इति वि०। "वेधाः"—इति मेधाविनामसु पठं नैघ-ण्टुकम् ३,१५।

अथ नवमी ।

१ २ ३ १ २ ३ १ २
गोमन्नइन्दोअश्ववत्सुतःसुदक्षधनिव ।
१ २ ३ १ २ ३ ३ १ २
शुचिञ्च*वर्णमधिगोषुधारय ॥ ९ ॥ १०८ †

१ ५ २ ३ ४ ५ ५ १
गो४मन्नः । होइ । इन्दोअश्ववा६दे । सुतःसुदक्ष
१ १ २ १ १ २ ३ ४२ २
धा१नी३वा । शुचिञ्चवा२३४५ । णमधिगो२३४औहो
१ ५ ११ २ ४ ५ ४
वा । षु२३४धा । रया । औ३होवा । हो५इ । डा ॥
॥ ३४ ॥ १०८

पर्वतनारदावृषी । हे "सुदक्ष" सुबल ! हे "इन्दो" सोम । "सुतः" अभिषुतस्त्वं "नःअस्माकम्"‡ "गोमत्" यज्ञ-साधन-गो-युक्तं धनं "धनिव" धन्व [ वर्णविकारः ¶ ] गमय [ धन्वतिर्गत्यर्थः § ] ततो हं "शुचिं" पूतन्दीप्यमानं "वर्णं" रसञ्च "गोषु" क्षीरादिषु "अधिधारय" अधिकं प्रापयामि ॥

* "मे"—इति ऋ० ।

† ऋ० ७,१,१०,१=ऋ० ७,५,८,४=आर्चे १२,१,१४—१७,१,२—१८,२,६ ।

‡ 'नः अस्माकम्'—इति वि० ।

¶ "अन्त्ययोर्व्यत्ययम् (३.४,९८)"—इति पाणिनी-सूत्रस्य सुप्तिङित्यादिवचनं-...र्थः ।

§ नि० मै० २,१४,९४ ।

अथ दशमी ।

२ १ २   ३ १ २ ३ १२   २१
अस्मभ्यन्त्वावसुविदमभिवाणीरनूषत ।
१  २ ३ १ २ ३  १ २
गोभिष्टे वर्णमभिवासयामसि ॥ १० ॥ १०९ *

४  ५  २  ५  २ ३  ५
ष्टावास्मा । भ्यार२३४न्त्वा । वासुवी२३४दाम् ।
१  ३  ५  ३ १ २  ५  ३  ५
आभार२वा२३४णीः । अनाओ२३४वा । षा२३४ता ।
१२ २ २ १  ३ ३ २ १  २ २  ३
गोभिष्टेव । र्णमभिवा२३ । सयामसिवो२३४५इ । डा ॥
॥ ३५ ॥ १०९

"धनिव"-"धन्व"—इति, "धारय" "दीर्घरम्"—इति च छन्दोग बह्वृचानां पाठभेदः ॥ ९ ॥ १०८

पर्वतनारदावृषी । सोम ! "वसुविदं" धनस्य दातारं "त्वा" त्वाम् "अस्मभ्य" धनादिदानार्थं "वाणीः" अस्मदीयावाचः "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने ( अदा०प० ] । वयं "ते" तव "वर्णम्" आवरकं रसं "गोभिः" गो विकारैः क्षीरादिभिः "अभिवासयामसि" अभिवासयामः अभित आच्छादयामः ॥ १० ॥

* ऋ० ९,५,९,४ ।

अथैकादशी।

१२ ३२उ ३१ ३१२ ३१ २
पवतेहर्यतोहरिरतिह्वराᳬसिरᳬह्या।
३क२र ३ १२ ३१२३१२
अभ्यर्षस्तोतृभ्योवीरवद्यशः॥ ११॥ ११०

५ र २१र २
(यशाᳬसि त्रीणि॥) पवतेहा। र्यतोहरिः। औ
२ ३ ५ १ २१ १र १ २र
३हो३१इ। औ२हो२३४वा। अतिह्वरा२ᳬसिरᳬह्यिया।
१र २ ३ ५ २ १० र १२र१
औहो३१इ। औ२हो२३४वा। अभ्यर्षस्तोतृभ्योवा।
२ २ ३ ५ १ ३ ५र र
औ३हो३१इ। औ२हो२३४वा। रा२वा२३४औहोवा।
१र १ २ १ १ १ १
यशोयशा२३४५ः॥ २६॥

३१ ४ ५र २१र २र१ ५
पवा३। पवतेहा। र्यतोहरिः। औहोइ। औ३
२ १र २ १ २१ १र १ २ र र १
होइ। औहोइ। अतिह्वरा२ᳬसिरᳬह्यिया। औहो
५ २ १र २ १२ र १२र१ १र
इ। औ३होइ। औहोइ। अभ्यर्षस्तोतृभ्योवा। औ

* उ० १.२.२२.१=ऋ० ७,५,११,१=अवे १ २.१६—६.२.१५—६.२,१६—९.३,१= ऋग्वे ९,१,२६।

होइ । औ३होइ । औहो३ । रा२वा२३४औहोवा ।
यशोयशा२३४५ः ॥ ३७ ॥

पवतेहर्यतः । हरी३ः । आ२३४ । तिह्वरा(ं)सिर ।
ह्या । अभ्यर्षा२३४ । स्तोतृ । भ्योवा३इ । रा२वा
२३४औहोवा । या२३४शाः ॥ ३८ ॥ ११०

अग्नियाक्षुष ऋषिः । "हर्यतः" स्पृहणीयः* "हरिः" हरितवर्णः सोमः "रंह्या" [तृतीयाया आकारः†] साधु वेगेन "ह्वरांसि" कुटिलानि अनृजूनि पवित्राणि "अति पवते" अतीत्य गच्छति । अथ प्रत्यक्षस्तुतिः—हे सोम ! त्वं "स्तोतृभ्यः" "वीरवत्" पुत्रयुक्तं "यशः" "अभ्यर्ष" अभिगमय प्रयच्छेत्यर्थः‡ ।

"अभ्यर्ष"-"अभ्यर्षन्"—इति साम्न ऋचः पाठौ ॥ ११ ॥ ११०

---

* 'हरिभिर्यन्ता'—इति वि० ।

† ''सुपांसुलुक् (७,१,३९)'—इत्यादिनेति भाव ।

‡ 'विनियोगोऽस्य प्रथमस्येति'—इति वि० ।

अथ द्वादशी।

३ १ २ ३ २ ३ १ २ ३ १ २
परि कोशम्मधुश्चुतꣳ सोमः पुनानो अर्षति।

३ १२ ३ ३ १ २ ३ १ २
अभि वाणीऋषीणाꣳ सप्ता* नूषत॥ १२॥ १११ †

॥ तृतीय-दशति॥

२ १ २ ४ ५ १२
(भारद्वाजम्॥) परि कोऽ३शम्मधुश्चुताम्। सोमः

१ २ १ २ १ १ २ १ २ २२ १ २२
पुनानो अर्षति। चोयि३। अभिवा२३४५। णीऋषी

२ १ २ ३ ५ २ ५
णाꣳस। प्तानो ओ२३४वा। पा२३४ता॥ ३८॥१११

॥ इति अर्द्धःप्रपाठकः॥

हितऋषिः‡। सः "पुनानः" पूयमानः सोमः "मधुश्चुतं" मधुर-रसस्य च्यावयितारं द्रोणकलशं प्रति आत्मीयं रसं "पर्य-र्षति" परि गमयति। तमिमं सोमम् "ऋषीणां" "सप्त वाणीः" सप्तच्छन्दांसि¶ "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने कुटादिः (प०)।

---

* "सप्त"—इति ऋ०।

† ऋ० ७,५,६,२।

‡ "आप्त्यः"—इति ऋचि मे०।

¶ गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्ति, त्रिष्टुप्, जगती चेति सप्त-च्छन्दांसि।

"सोमः पुनानो अर्षति"-"अव्यये वारे अर्षति"—इति साम्न ऋचः पाठो॥ १२ ॥ १११

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य दशमः खण्डः॥

॥ इत्यौष्णिहम् ॥

—:○:—

एषः पवस्वेति खण्डेऽस्मिन्नृचोऽष्टौ ककुभोऽत्र तु।
'ससुन्वे'-इति गायत्री यवमध्येति* केचन।
अक्षरव्यूहनादेषा ककुबेवेति केचन।
"एष धारयासूतः" प्रगाथः काकुभोऽन्तिमः।
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे॥

तत्र एकादशे खण्डे—

सैषा प्रथमा।

१ २ ३ १ २　३ १ २　३ १ २ ३ १ २
पवस्वमधुमत्तमइन्द्रायसोमक्रतुवित्तमोमदः।
१ २ ३ १ २ ३ १ २
महिद्युक्षतमोमदः॥ १ ॥ ११२

---

* "विपरीता यवमध्या (पि० ३, ५८)" यदाद्यन्तौ पादौ न्यूनाक्षरौ भवतः मध्यमश्च बह्वक्षरः तदा यवमध्येति कथ्यते।

१ उ० १,१,१६,७=ऋ० ७,४,१७,१ = ऋ० ८,६,६—७,१,८—८,२७—१०,१,४—१०,७,४—१३,१,४—१३,२,१८—१४,१,८।

ओम् ॥ (वासिष्ठम् ॥) पावा । स्वमाधुमा । तामा ओ२३४वा । ई२३४न्द्रा । यसोमक्रतुवित्तमोमदा३ः । ओइ । माद्वाओ२३४वा । द्युत्तमोमदा२३४५ः ॥ १ ॥

(सफम् ॥) पा३४ । वस्वम । धुमत्ता३६माः । आ इन्द्रा२ । यसोमा२ । क्रतुवाइत्ता३मो३ । मा३दाः । महिद्युत्ताता३मो३ । मा३४५दो६हाइ ॥ २ ॥

पवस्वमधुमा । इहा । तमः । इन्द्रायसोमक्रतुवित्त मोमा२३दाः । इहा । महाइद्यु२३त्ता । इहा । तमो मा२३दा३४३ः । ओ२३४५इ । डा ॥ ३ ॥

(वासिष्ठम् ॥) पवस्वमा । ए५ । धुमा । तमाः । इन्द्रायसो३ । हा । औ३हो । माक्रातुवो२३दा३ ।

अथ द्वितीया ।

३ २ ३ २ ३ १२उ ३ १ २　　२ १ २　　३ २
अभिद्युम्नम्बृहद्यशइषस्पतेदिदीहिदेवदेवयुम् ।
१र　२र　३ १ २
विकोशम्मध्यमंयुव ॥ २ ॥ ११३ *

१　२　२　३ १　३ २　१　२　१ २
वा । औ३वो३४ । तमो३४मदाः । मघाये३ । द्यूरत्ना २
५र　र　२र　१ ३ १ १ १ १
३४औवोवा । तमोमदा२३४५ः ॥ ४ ॥

२ १ ०　३ ५　२ ३　५　२ १र
( सफम् ॥ ) पवस्वा३मधु । मत्ता२३४माः । इन्द्रा
२ १　१　२　२　५　२ १
यसोमा २ । क्रतुवाइत्ता३मो३ । मो३२३४दाः । महा
२ ३　२　५
इ । द्युत्ताता३मो३ । मा३४५दोईयाइ ॥ ५ ॥ ११२

गौरिवीतिः ऋषिः† । हे "सोम" ! "मधुमत्तमः" अतिशयेन माधुर्योपेतस्त्वम् "इन्द्राय" इन्द्रार्थं "मदः" मदकरः सन् "पवस्व" क्षर । कीदृशः ? "क्रतुवित्तमः" अत्यन्तं प्रज्ञायाः कर्मणो वा लम्भकः "महि" "महान्" मंहनीयो वा "द्युक्षतमः" अत्यन्तदीप्तः "मदः" हृष्टः ॥ १ ॥ ११२.

* उ० ३,२,१७.१=ऋ० ७.५,१८,४ । ऊह ३,१,९— ५.१.१ — ८,१,१३—१४,१,१४

† "गौरावीः"—इति अपि-मे० ।

( ऐविराणि चत्वारि ॥ ) यभाइ । द्युम्नाइम्नूइव

द्यग्नः । इषाः । पतेदिदीहिदेइवाइदेवयुम् । विको ।

ग्नम्म । ध्यमा३०यू५वा६५६ ॥ ६ ॥

भ्म । भ्यैद्युम्नाम् । बृहाद्या१ग्रा२ः । इषास्पता

इ । दीदीहा२३४इदे । वदाइवा२३४यूम् । विकौवा

भो२३४वा । ग्नम्मध्यमा३१उवा२३ । यू२३४वा ॥ ७ ॥

भभिद्युम्नम्बृहत् । इवा । यग्नः । इषस्पतेदिदीहि

देवदेवा२३यूम् । विकौहोवा३हाइ । ग्नम्मा२ध्यमंयुव ।

इडा२३भा३४३ । भो२३४५ । डा ॥ ८ ॥

भभिद्युम्नम्बृ६हद्यशाः । इषस्पताइ । दिदीहिदा

इ । वादेवयूम् । विकोग्नम्मध्यमा२३ुहोइ । यू२३४

वा । एहियाइहा । होपूइ । डा ॥ ८ ॥ ११२

(काण्वश्रवसानि त्रीणि॥) आसीतापा। रा२इ
पा२३४औहोवा। चा२३४ता। अश्वन्नस्तोममप्तुरार२७र
जस्तुरम्। ओयि३। वना३। ओयि। प्रश्वा३४।
औहोवा। उदप्तुता२३४५म्॥ १०॥

आसीतापा। रिपि। चता२। ऊ२। हा२इ।
ऊ२। अश्वन्नस्तोमम। प्तुरा२म्। ऊ२। हा२इ।
ऊ२। रज। स्तुरा२म्। ऊ२। हा२इ। ऊ२।
वन। प्रश्वा२म्। ऊ२। हा२इ। ऊ२। उद।
प्रूरता२३४औहोवा। ऊ३२३४पा॥ ११॥

आसीतापा। रि। पाइ। चता। अश्वान्नस्तो।
मामप्रू२३४राम्। रजास्तू२३४राम्। वनोहाइ। प्रा
श्वामू३दा। इम्मायि३। प्रू२३४ताम्॥ १२॥

१र २ २र ५
( वाचःसामानि त्रीणि ॥ ) आसोतापारी६षिञ्चता ।
१ २ १ ५ १र २ १ ३र १
आश्वाओ२३४वा । नस्तोममप्सुरा२९रजस्तुरा२३म् ।
१ २ १ ५ ११ २१ १ ११११
चोइ । वानाओ२३४वा । प्रत्नमुदप्रुता२३४म् ॥ १३ ॥
३र २ ३र ४र ५ १र ७ १
आसो३४औचोवा । तापराइषिञ्चाता २ । आश्व-
२ र १ ० १२ २ ५ ४
न्स्तो । मामप्सूरा २म् । रजास्तू२३४राम् । वनो
१ २ ५
चाइ । प्रात्नमुदा३१उवा२३ । प्रू२३४ताम् ॥ १४ ॥
१र ४र ५र २ ३ ४ ५ १ २ र
आसोतापा । चो । रिषिञ्चता६ए । आश्वनस्तो
१ ० १ २ १ ७ १
मामप्सूरा २म् । राजस्तुरम् । वानप्राश्चा२३म् । ज
४ २ ५
२३दा३ । प्र३४५तोई चाइ ॥ १५ ॥

ऋजिश्वा ऋषिः* । हे ऋत्विजः ! "आ सोत" सोम मभिषुत [षुञ् अभिषवे ( स्वा०उ० ) लोटि छान्दसो विकरणस्य लुक् †

* "भारद्वाजः"—इति क्वचित् ।
† "सुपांसुलुक् ( ७,१,३९ )"—इत्यादिनेति भावः ।

अथ चतुर्थी।

२ ३ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
एतमुत्यम्मदच्युतꣳसहस्रधारंवृषभन्दिवोदुहम्।

२ ३ १ २ ३ १ २
विश्वावसूनिबिभ्रतम्॥ ४ ॥ ११५ *

(कौत्समलवर्हिषे द्वे॥) एताम्। उत्याम्। मदा

रच्यू२३४ताम्। सहास्रधा। रांवृषभा३म्। दिवो

"तमनमममथनास (पा०७,१,१४५)"—इति तस्य तवादेश:] किं च। "परि षिञ्चत" परितः वसतीवर्यादिभिः सिञ्चत। कीदृशम्? "अश्वं न" अश्व मिव वेगिनम्। "स्तोमं" स्तोतव्यम् "अप्तुरम्" † अन्तरिक्षस्थितानामुदकानां प्रेरकं "रजस्तुरं" तेजसां वा प्रेरकम। "वनप्रक्षम्" उदकैः सम्पृक्तम्। यद्वा। काष्ठेषु पात्रेषु धारकं प्रकीर्णम् "उदप्रुतम्" उदकं गच्छन्तं प्लवमानं सोम मभिषुत मभिषिञ्चत॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति साम्न ऋचः पाठौ॥ ३॥११४

---

* ऋ० ७.५,१८,१।

† 'तरति तम्'—इति वि०।

‡ 'विनियोगोऽस्य वनीपेऽस्मि'—इति वि०।

र १ ५ १ १
२दु२३४हाम् । विश्वा२चौ१इ । चोइ । वा२३च३ ।

१ र १ ५र र १ ५
ना२इवा२३४चौचोवा । आ२३४ताम् ॥ १६ ॥

४५ ४५ १ ५
एतामूत्याम् । मदा३१ओवा२३ । च्यू२३४ताम् ।

२१ १र १ २र्‌१ २ ४ ५ ४५ १
सहस्रधारंवृषभन्दिवोदुहा२३म् । वाइश्वावासु । निवा

२ ५
३१ओवाये३ । आ२३४ताम् ॥ १७ ॥

५र ४ ५ ४ ४ १
( आङ्‌ ॥ ) एतमुत्यम् । एप् । मदा । च्युताम् ।

र २ १र १ १० १
सहस्रधारंवृषभंदिवोदू२३हाम् । वाइश्वा२वास२३ ।

४ ५
निवो२३४वा । आपूतो६हाइ ॥ १८ ॥

५र ४ ५ ४
( कौल्मलबर्हिषाणि त्रीणि ॥ ) एतमुत्यम् । ओ

५ ४५ ४ १ १ ५
हाइ । मदच्युतम् । ओहाइ । साहस्रा३३४धा ।

२१र ५ १ र १ ५ १
रवार्षा२३४भाम् । दिवोदुहमे२३४हाइ । विश्वा२वा

१इ। वा२३ह३। ना२इवा२३४औहोवा। आ२३४
ताम्॥ १९॥

एतामुत्यम्मदाच्युताम्। साहस्रधा। रांवृषभा-
रम्। दिवो२। दुहमोइ। विश्वावसूनिबा२३होइ।
आतमा३१उवा२३। ऊ२३४पा॥ २०॥

एता३४म्। उत्यम्मद। च्यूताम्। सहस्रधार२
वृ। षभम्। दिवो२३१२३। दू२३४हाम्। विश्वा
वसूनिबा३औये३। आ२३४ताम्। एहियाद्हा। होप्इ।
डा॥ २१॥ ११५

शतयशाऋषिः*। "दिवः" देवान् कामयमानाऋत्विजः†।

* "आङ्गिरसः"—इति ऋषि नं०।

† 'दिवो दुहम—दिव आहृत्य इमं लोक मुदकेन पूरयति'—इति वि०।

अथ पञ्चमी ।

१ १ २ १र २र३ २ २ १ १ २ १ २र

मसुन्वेयोवसूनांयोरायामानेतायइडानाम् ।

२ ३ १ २ ३ २

सोमोयःसुक्षितीनाम् ॥ ५ ॥ ११६ *

४ ५ १र र २ १

(दीर्घम् ॥) साम्नु । न्वेयोवसू२३नाम् । योरा

१ र र १ २ १ २ १

२यामा२ । नेतायइडा२३नाम् । सो२३माः । यःसु

२ १ ५ ५

क्षिता२३४इनोई्वाइ ॥ २२ ॥

"एतं" "त्यमु" सोममेव "दुहम्" अदुहन् [दुहेर्लिङि रूपम्†] दुहन्ति स्म [छान्दसो नकारस्य मकारः‡ ।•"ग्रावाणो वत्सा ऋत्विजो दुहन्तीति" तैत्तिरीयकब्राह्मणम्] कीदृशं सोमम्? "मदच्युतं" मदस्य प्रेरकं "सहस्रधारं" बहुधारम् "वृषभं" कामानां वर्षकं "विश्वा" सर्वाणि "वसूनि" धनानि "बिभ्रतं" धारयन्तम् ॥

"दिवोदुहम्"—इति, "दिवं दुहम्"—इति पाठौ ॥ ४ ॥११५

* उ० ४,१,१८,१=ऋ० ९,५,१८,७=अर्च ३,२,२ -२७,१,१४ ।

† "दुह प्रपूरणे"—धातु० पा० ।

‡ "अत्ययोबहुलम (पा०७,१,४८)"—इत्यनेनेति भावः ।

(लोमसाम)॥ सत्सुचाउ। न्वेयोवद्धनार२३९चाउ। योरा२यामा२। नेतायः। दूडाना२३९चाउ। सोमोयःद्भ२३चाउ। च्चितीनाम्। औ२३चोवा। चोपूइ। डा॥२३॥

सोमसामानि त्रीणि॥) सः। त्वेसाद्ध। न्वेयोवसा३१उवा२३। ना२३४५म्। योरा२यामा२नेतायइडा२ना३म्। सोमोवाओ२३४वा। यःसुचिता३१उवा२३। ना२३४५म्॥२४॥

सत्सुन्वे२३योवद्धनाम्। योराया१मा२३ने। तायडूडा२३४५ना६५६म्। सोमो२यःसुच्चितीनाम्। सोमा२३४५ः॥२५॥

सत्सुन्वयाः। एवाद्ध। नायोरा१या२३मा! नेता

अथ षष्ठी।

२ १ २ ३ १ २ २ १ २ ३ १ २
त्वᳪ ह्या३ङ्ग* दैव्य†पवमानजनिमानि द्युमत्तमः।

३ १ २ ३ १ २
अमृतत्वाय घोषयन्॥ ६॥ ११७ ‡

१ २ ३ २ २ १ २ १
यद्दारर्नाउम्। सोमाः। यःसुक्षि। ता२३४५इ।

३ १ १ १ १
ना२३४५म्॥ २६॥ ११६

ऋणवृक्षर्षिः¶। "यः" "सः" "सोमः" "सुक्षि" अभिसुषुवे ऋत्विग्भिः §। यः सोमः "वसूनां" धनानां "आनेता" यश्च "रायां" [राण्ति प्रयच्छन्ति क्षीरादिकमिति] रायो गावस्तेषा मानेता विद्यते यश्च सोमः "सुक्षितीनां" शोभन-मनुष्याणाम्॥ आनेता सोऽभिषुतोऽभूदिति + ॥ ५॥ ११६

* "ह्या३ङ्ग"—इति } क०-पाठौ।
† "देवा"—इति च }

‡ उ० ५,१,१०,१ – ऋ० ७,५,१०,३ :: ऋषे १,२,११—५,२,२६—११,२,१८—१९, १,११।

¶ "आङ्गिरसः"—इति ऋषि-नि०।

§ "सुक्षि सुम"—इति वि०।

॥ "क्षितयः"—इति मनुष्यनामसु पठ्यते नैघण्टुकम् २,३।

+ 'विनियोगोऽस्य पञ्चस्वपि' इति वि०।

५ २
( ग्रैतोश्माणि चत्वारि ॥ ) त्वꣳह्यिया । गदाइवियप

२ २ १ १ १ १
वमानजनिमानीइद्यूमा२ । तामा२ः । आमा२त्ता

२ १ ५ ४ ५
त्वा२३ । यघो२३४वा । पा५योर्इहाइ ॥ २७ ॥

५ २ १ २ १ २र १ २ २
त्वꣳह्यिया । गदाइविय । पवमान । होवा३हाइ ।

१ २ ५ २ २ १ १
जनिमार२३नी३४ । द्युम । ता३माः । अमा२३ । ता

३ ५र र २ १ ११११
२त्वा२३४औहोवा । यघो३षया२३४५न ॥ २८ ॥

४ ५ ४ १ र र २१
त्वꣳह्यङ्गदा॰ । विय । पवमानजनिमानिद्युमत्ता२

२ १ २ २१ ५ ४
३माः । अमात्ता२३त्वा३ । यघो२३४वा । पा५योइ

५
हाइ ॥ २९ ॥

५ २ ४॰५ ४र ५ २१ १ २१ १
त्वꣳहो३मङ्गदैविया । पवमा२ना । जनिमा२ना

२ ५ २ २ १ २ २ २१
ये३४ । द्युम । ता३माः । अमात्ता३त्वा३ । यघो२

५ ४ ५
३४वा । पा५योइहाइ ॥ ३० ॥ ११७

अथ सप्तमी ।

२ १　 २८　३ २　३　१ २　　 ३ १ २

एषस्यधारयासुतोव्यावारेभिःपवतेमदिन्तमः ।

१ २ ३　२ ३ १　२

क्रीडन्नूर्मिरपामिव ॥ ७ ॥ ११८ *

४ ५　　 २ ३ २

(गायत्रपार्श्वम् ॥) एषा: । स्याधारया२१उवा

५　　 १ ५२　१२२ ३　 २ १ २　 २

२३ । सू२३४ता: । अव्या२वारेभिःपवतेमदिन्तमः । क्री

१ २　　　 ३ २　　 १　 ४　 १　 ११११

डानू१मी२ः । अपा३म् । ऊ२३वा३ । आइ्वा२३४५ ॥ ३१॥

शक्तिःऋषिः † । हे "पवमान" पवमान सोम ! "द्युमत्तमः" अतिशयेन दीप्तिमान् "त्वं हि" त्वमेव "दैव्यं" देवसम्बन्धीनि "जनिमानि" जन्मानि देवानित्यर्थः । जानासीति शेषः । तानभिलक्ष्य "अमृतत्वाय" तेषाम् अमरणाय "अङ्ग" क्षिप्रं ‡ "घोषयन्" ऋत्विजो ग्रावाणोव शब्द मुदपादयन् उत्पादयन्ति ¶ [हि योगादनिघातः § ॥

"घोषयन्"-"घोषः"—इति पाठौ ॥ ॥ ६ ॥ ११७

* ऋ० ७,४,१७,५=ऋवे ७,१.११ –१८,१.१ ।

† "वासिष्ठः"—इति ऋषि-सं० ।

‡ "अङ्गेति क्षिप्रनामाशितमेवाङ्कितं भवति"—इति यास्कः (निरु०-सं०५,१७) ।

¶ 'घोषयन् शब्दयन्'—इति वि० ।

§ "हि च परञ्छन्दसि"—इति पा० ८,१,५६ ।

‖ 'विनियोगोऽस्य ततीयेऽह्नि'-इति वि० ।

४र ५ १ र २
(सन्तनि) ॥ एषाश्चाउ । स्याधारयाइ१उवार३ ।
५ १ ३र १२र २ र १ २ ४र
सू२३४ताः । अव्या२वारेभिःपवतेमदिन्तमा२३ः । क्रीडन्
५ १ २ ५
च्चाउ । ऊर्मिरपाइ१उवा२३ । ई२३४वा ॥—*

२ १र र २
(सोमसामानि चैव त्रीणि ॥) एषस्यधा । राया१
२ र १र १ २र ३ .२ १
सुतार:। अव्यावाराइ । भाइःपवते । मदिन्तमाः ।
२र १ २ १ ४ २ ५
क्रीडन् २३र्मीः । आर३पा३म । आ३४५इवोईचाइ ॥२३॥
२ १ २ ४र ५र १ १र र
एषस्याइधारयासुताः । अव्याचो२इ । वारेभिःपव
र ७ १र २ ३ र
तेमादिन्तामा२ः । क्रीडा रन्चो१इ । ऊ२३र्मीः । अपा
२ १ २ ४ ५ ४
मिवा । औ३चोवा । चो५इ । डा ॥ २४ ॥

* एतस्यैव साम्नः परार्द्धं यउस्थिधेत्यष्टमर्चां गानम् । अनयोः सप्तमाष्टमयोः ऋचोः प्रमाणी भवति । मीमांसादर्शनाधिकरणमालायां नवमाध्याय-द्वितीयपाद-षष्ठाधिकरणादौ तत्तत्वादयोऽपि विचारिताः । अस्ति चात्रैव भाष्यकृतो भूमिकायां तत्तुलेखः समन्तात् (२५पृ०—३८पृ०) तेनानयोः त्र्यृक्वं सम्पद्यते. यत्तैतादृश् वि-च-सूक्त-साम-दर्शनस्यायमेव हेतुः । तादृश-त्र्यृक् सूक्त सामानि चात्र ऊहे (४, १, ८, २, १) एव द्रष्टानि ।

३४वा । ५

४र २४ ११र २र१ २१११
एषस्यधा५रयासुता:। अव्यावाराइ। भिःपवता२

१२ २ १र र १ १ ५ ५
३इ। मदिन्तमा:। क्रीडन्नूर्मिरपोवा३ओ२३४वा। आ

५
५इवोई३वाइ॥ ३५॥ ११८

॥ इति ग्रामे गेये सप्तदशः प्रपाठकः॥

॥ इति गेयगानं सम्पूर्णम्॥

उरुऋषिः*। "स्यः" सः "एषः" "सुतः" अभिषुतः सोमः "अव्या वारेभिः" अवेर्वालैः तेभ्यः पवित्रे "धारया" आत्मीयया "पवते" कलश मभिलक्ष्य क्षरति। कीदृशः? "मदिन्तमः" मादयितृतमः। "अपामिव" उदकानाम् "ऊर्मिः" सङ्घात इव "क्रीडन्" इतस्ततः सङ्कीडमानः पवते†॥

"अव्यावारेभिः"—"अव्योवारेभिः"—इति साम्न ऋचः पाठभेदः॥ ७॥ ११८

* "चाक्षिरस:"—इति ऋषि मे०।

† 'विनियोगोऽस्य सप्तमेऽवगि'—इति वि०।

अथाष्टमी ।

२१ २३ १ ३ २ २ १ २र ३ १ १र ३ १ २
यउस्रियाअपियाअन्तरश्मनिनिर्गाअकृन्तदोजसा ।
१ २ २१ ३ २ ३ २ ३१ २ २ १ २ १ ३१
अभिव्रजन्तत्निषेगव्यमश्वंवर्मीवधृष्णवारुज (ओ३म् वर्मी
२ ३ १ २
वधृष्ण,वारुज* ) ॥ ८॥ ११९ †

॥ चतुर्थ-दशति ॥

॥ इति षष्ठः प्रपाठकः समाप्तः ॥ ‡

॥ समाप्तञ्च छन्दआर्चिकम् ॥ ¶

१ ५र १ र २ ४ ५ १
यउस्रियार अपियाअन्तरश्मनीर३ । निर्गाहाउ । आ
२ ५ २१ २ र १
कृन्तदा३१उवार३ । जार३४सा । अभिव्रजन्तत्निषेगव्यम
३ ४ ५ १ २
श्वियार३म् । वर्मीहाउ । वाधृष्णवा३१उवार३ । रुर
५
३४जा ॥ ३२ § ॥ ११९

* क० ख० पुस्तकयो रेव मध्यासपाठो न दृश्यते । वस्तुतः अप्पदादि-समाप्तावपि अभ्यासो वैदिकशैली ।

† ऋ०७,५,१८,१=अष्टे ४,१,२—१८,१,१ ।

‡, ¶ भाष्यलतः सायणस्य मत-विरुद्धमेतत् परं तु सर्वमूलपुस्तकेषु ।

§ इदं हि, पूर्व-प्रदर्शित 'सप्तमि'-नामकस्य 'स्थायाउ'—इत्येतस्य ( १२८ पृ० ) साम्नोऽन्तिमं दत्तम् । एतच्च न तु गेयगानादन्यदिति ध्येयम् । अतएव हाविंशदङ्का न्तमिति भ्रम ।

ऋजिश्वाऋषिः *। "यः" सोमः "उस्रियाः" उत्सरणशीलाः† "अपियाः" अप्याः [आपइत्यन्तरिक्षनाम (नै०१,३,८)। तस्मात् "भवे छन्दसि (पा०४,४,११०)"—इति यत्] अन्तरिक्षस्थाः। अहि-प्रभृतिभिरसुरैः ‡ अपाहृत्य निहिता "गाः" आपः ¶ "अश्मनि" मेघे § "अन्तः" मध्ये स्थिताइत्यर्थः। "ओजसा" बलेन "निरतनत्" निरच्छिनत् निरगमयत् अन्तरिक्षाद्दृष्टि मकार्षीदित्यर्थः। स त्वम् असुरै रपहृतं "गव्यम्" गो-सम्बन्धि "अश्व्यम्" अश्वेषु भवं "व्रजं" समूहं "अभि तत्निषे" अभितो व्याप्नोति [तनु विस्तारे—छान्दसे लिटि ‖ "तनिपत्योश्छन्दसि (पा०६,४,९९)"—इत्युपधालोपः]। किञ्च। हे "धृष्णो" शत्रु-धर्षणशील+ सोम! स त्वं "वर्मीव" कवचीव÷ "आरुज" असुरान् जहि॥

---

* "भारद्वाजः"—इति ऋषि-नै०।

† 'उस्रियाः आदित्य रश्मयः अनड्वाहो वा'—इति वि०। "उस्रियाः"—इति गोनामसु तृतीयं नैघण्टुकम् (२,११)। "उस्राः"—इति तु रश्मिनामसु नवमं नैघण्टुकम् (१,५)। "उस्रियेति गोनामोत्स्राविणोऽस्यां भोगा उस्रेति च"—इति यास्कः (निरु० नै०४,१९)।

‡ अहिरिति असुरइति चेमौ द्वावेव मेघपर्य्यायौ नै०१,१०,२३,१९।

¶ इव मामं मृग्यम्।

§ "अश्मा"—इति मेघनामसु अष्टमं नैघण्टुकम् १,१०।

‖ "छन्दसि लिट्"—इति पा० ३,२,१०५।

+ 'धृष्णो धारयन्'—इति वि०।

÷ 'वर्मी सविता'—इति वि०।

"अपिया अन्तरश्मनि"-"अप्या अन्तरश्मन:"—इति छन्दोग-बह्वृचानां पाठभेद: ॥ ८ ॥ ११९

इति श्रीमत्सायणाचार्य्य-विरचिते सामवेदार्थ-प्रकाशे छन्दो-व्याख्याने पञ्चमस्याध्यायस्यैकादश: खण्ड: ॥११॥

॥ इति काकुभं समाप्तम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वर: ॥ ५ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमोऽध्याय: समाप्त ॥ ५ ॥

॥ सौम्यं पावमानं वा पर्व काण्डं वा समाप्तम् ॥

॥ इति तृतीयं पर्व ॥

ॐ नमः सामवेदाय।

# अथ षष्ठोऽध्याय आरभ्यते ॥



यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥

आरण्यकाभिधः* षष्ठोऽध्यायो व्याक्रियतेऽधुना† ॥ २ ॥
तत्रेन्द्रेत्यादिकानान्तु पञ्चपञ्चागतां क्रमात्।
ऋषिं छन्दो देवतञ्च तत्र तत्राभिदध्महे ॥ ३ ॥

तत्राद्याया ऋचो द्रष्टा भरद्वाजः प्रकीर्त्तितः।
द्वितीयस्या वसिष्ठः स्यात्तृतीयाया ऋचः स्मृतः ॥ ४ ॥
वामदेव स्ततश्छन्दो बृहती त्रिष्टुबेव च।
गायत्रीति क्रमादिन्द्रो भवेत्तिसृषु देवता ॥ ५ ॥

* "अरण्यान्मनुष्ये" (४, २, १२९ पा०)। अत्यल्पमिदमुच्यते मनुष्य इति (प०)। पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् (का०)। आरण्यकः पन्थाः। आरण्यकोऽध्यायः। आरण्यको न्यायः। आरण्यको विहारः। आरण्यको मनुष्यः। आरण्यको हस्ती (प०)। वा गोमयेषु (का०)। वा गोमयेष्विति वक्तव्यम्। आरण्यका गोमयाः आरण्या गोमयाः (प०)।

† अथ आर्चिकग्रन्था इति विवरणादि-सकल-ग्रन्थेष्वपि नैदिक-प्रवादाद्गताः पुस्तकालय-समीक्षणेनोपलभ्यताम्। तथाच षडध्यायात्मकश्छन्दो नाम एकः, अपरो

तत्र प्रथम-खण्डे—

सैषा प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रज्येष्ठन्नआभरओजिष्ठम्पुपुरिश्रवः

१र २र ३ १ २ ३ १र १२र
यद्दिधृक्षेमवज्रहस्तरोदसीउभेसुशिप्रपप्राः ॥ १ ॥ १ *

२र २र र र र २ १र
† हाउ। ३। औहोइन्द्रज्येष्ठन्नआभरा३ए। हाउ।

१र १ २ र१ २ २र र र १ २
३। औहो२। ओ२। जिष्ठम्पूपारा। औहोवाश्रावाः।

२र १र १ २ र १ २ २
हाउ। ३। औहो२। या२त्। दिधृक्षेमाव। ज्र

२र र र र १ २ २र १र
हस्त। औहोवारोदासौ। हाउ। ३। औहो२।

१ २र १ २ २र र र १ २ २र
ओ२। भेसुशाइप्रा। औहोवापाप्राः। हाउ। ३।

१र ११ २ २ २ १
औहो२। यो२। उइवा३हाउ। वा३। हस् ॥२४॥१ ‡

---

नवाध्यायात्मक उत्तरः, ताभ्यामन्यत् षष्ठोऽध्यायैकात्मकः आरण्यक इति व्यवहृतः। सायण-मते तु नैवम्। अयं हि पञ्चोपविभागैरेव छन्दोग्रन्थं परिसमाप्य तस्यैव षष्ठोपभाग एष इति मन्यते।

* ऋ० ४,७,१७,५। † "भारद्वाजम्"—इति आ० ग्रा० २, २, ९।

‡ आ० पा० १प० १, १, २४।

हे "इन्द्र"!* "ज्येष्ठं" प्रशस्यतमम् "ओजिष्ठम्" अतिशयेन बलकरम् "पुपुरि" पूरकं "श्रवः" अन्नं "नः" अस्मभ्यम् "आभर" आहर प्रयच्छ। हे "वज्रहस्त" वज्रबाहो!† हे "सुशिप्र" शोभन-हनुक! एवम्भूत! हे "इन्द्र"! "यत्" "अन्नं" "दिधृषेम" धारयितु मिच्छेम यस्माद् इमे परिदृश्यमाने "उभे" "रोदसी" द्यावापृथिव्यौ "आ पप्राः" आपूरयसि। तदन्न माहरेत्यन्वयः।

"येनेमेचित्रवज्रहस्त"—इति बह्वृचानां पाठः ॥ १ ॥ १

---

* "इन्द्रतेर्वैश्वर्य-कर्मणः"—इति नैरुक्तम् (दैवतका० १०अ० ८ख०) इन्द्रव्याख्यानमिति तद्भाष्यम्।

† "अथाकारचिन्तनं देवतानां। पुरुषविधाः स्युरित्येकं चेतनावद्वद्धि स्तुतयो भवन्ति तथाभिधानानि। अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते—'ऋष्वा त इन्द्र स्थविरस्य बाहू' 'यत् संगृभ्णा मघवन् काशिरित्ते'। अथापि पौरुषविधिकैर्द्रव्यसंयोगैः—'आ द्वाभ्यां हरिभ्या मिन्द्र याहि' 'कल्याणीर्जाया सुरणं गृहे ते'। अथापि पौरुषविधिकैः कर्मभिः 'अद्धीन्द्र पिब च प्रस्थितस्य' 'आश्रुत्कर्ण श्रुधी हवम्'॥६॥ अपुरुषविधाः स्युरित्यपरमपि तु यद्दृश्यतेऽपुरुषविधं तद्यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति। यथो एतच्चेतना-वद्वद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि यथो एतत् पौरुषविधिकैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद्भवत्यभि क्रन्दन्ति हरितेभिरासभि रिति ग्रावस्तुतिर्यथो एतत् पौरुषविधिकैर्द्रव्यसंयोगैरित्येतदपि तादृशमेव सुखं रथं युयुजे सिन्धुरश्विन मिति नदीस्तुतिर्यथो एतत् पौरुषविधिकैः कर्मभिरित्येतदपि तादृशमेव होतुश्चित् पूर्वे हविरद्यमाशतेति ग्रावस्तुतिरेवापि वोभयविधाः स्युरपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युर्यथा यज्ञो यजमानस्यैष चाख्यानसमयः ॥ ७ ॥"
—इति निरु० दै०।

‡ "शिप्रे हनू नासिके वा"—इति निरु० नै० ६,१७।

अथ द्वितीया।

इन्द्रोराजाजगतश्चर्षणीनामधिक्षमाविश्वरूपंयदस्य।
ततोददातिदाशुषेवसूनिचोदद्राधउपस्तुतश्चिदर्वाक्॥२॥२

* हावीन्द्राः। राजा। जगतः। चर्षणीनाम्। नाम्। २। नाओइनम्। ३। नाहोइनम्। ३। हावौहो हाउ। अधिक्षमा। विश्वरू। पंयदस्या। स्या। २। स्याओइनम्। ३। स्याहोइनम्। ३। औहोहावोहो २। ततोददा। तीश्दाशु। पाइवसूनी। नी। २। नाओइनम्। ३। नाहोइनम्। ३। हावौहोहाउ। चोदद्राधाः। उपस्तु। तश्चिदर्वा। र्वा। २। र्वाओइनम्। ३। र्वाहोइनम्। ३। औहोहावौहो ३। हाउवा३। ई२३४५:॥ ८ †॥

"इन्द्रसाकौ द्वौ" – इति बा० ब्रा० १,२,१०।
† बा० भा० १प० १,१,८।

इन्द्राहाउ। राजा। जगतः। चर्षणीनाम्। नाम्।
२। नोवा। ३। नोवाहाइ। ३। हाओ३। हा
३हाउ। अधिक्षमा। विश्वरू। पंयदस्था। स्था।
२। स्थोवा। ३। स्थोवाहाइ। ३ हाओ३। हा३हा
उ। ततोददा। ती३दाशु। पाइवम्हजी। नौ। २।
नोवा। ३। नोवाहाइ। ३। हाओ३। हा३हाउ।
चोदद्राधाः। उपस्तु। तश्चिद्वीर्वा। वीं। २। वीं
वा। ३। वींवाहाइ। ३। हाओ३। हा३हाउ।
वा३। ई२३४५। ॥१०*॥२

यः "इन्द्रः" "जगतः" जङ्गमस्य पश्वादेः यतो "राजा" ईश्वरो भवति। चर्षणीनां मनुष्याणां च † राजा भवति। किञ्च "अधि" क्षमा [ सप्तम्येकवचनस्य लुक् ‡ ] क्षमायां ¶ "विश्व-

* आ० गा०१,१,१०।

† "चर्षणयः"—इति मनुष्य-नामसु पठितं नैघण्टुकम् २, ३।

‡ "सुपांसुलुक् (पा० ७, १, ३९)"—इत्यादिना।

¶ "क्षमा"—इति पृथिवी-नामसु पठितं नैघण्टुकम् १, १।

अथ तृतीया।

१ २ १ ३ १ ३ १ २ ३ २उ ३ २३क २र
यस्येदमारजोयुजस्तुजेजनेवनꣳस्वः।
१ २ ३ १ २ ३ १
इन्द्रस्यरन्त्यम्बृहत्॥ ३ ॥ ३

१ २ ३ १ र २ ३ १र र
* हाउयास्या। इदमारजोयू१जा २ः। तुजेजनेव
२ १ २ २
नाꣳसू१वा २ः। आइन्द्रस्या ३ ४ ५ रा ६ ५ ६। तियं
१
बृहत् ॥ ११ † ॥

रूपं" "यत्" धन मस्ति "अस्य" तस्यापि राजा भवति। "ततो ददाति दाशुषे वसूनि" यजमानाय। वसूनि धनानि ददाति। स इन्द्रः अस्माभिः "उपस्तुतं" सम्यक् स्तुतं "राधः" धनम् "अर्वाग्" अस्मदभिमुखं "चोदत्" प्रेरयतु।

"अधिचमा"—"अधिचमि"--इति, "विश्वरूपम्"--"विषुरूपम्"-इति, "उपस्तुतम्"—"उपस्तुतः"—इति च साम्न ऋचः पाठभेदः ॥ २ ॥ २

---

* "स्वर्ज्योतिः"—इति आ० ब्रा० ७,७,१०।

† आ० गा०१प० १, २, ११।

‡ दाशुषे—इति दानकर्मणो दाशतेः (नै० ३, २०, १) रूपम् "दाश्वान् साह्वान् मीढ्वांश्च (८) १,१२"—इति सिद्धम्।

अथ चतुर्थी।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २

उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳश्रथाय।

१ २ १ २ ३ १ २ १ २ ३ १ ३ १ २

अथादित्यव्रते वयन्तवानागसो अदितये स्याम ॥ ४ ॥ ४ *

२र १र १ २र १ १ १

॥ हाउ ३। आयुष्वतुर्ज्योतिः। औहोवा। ई

२ १ २ २ १ २ १ र

या। उदुत्तमं वरुणपाशमा२३स्मात्। अवाधमं विमध्यमꣳ

२ १ २ १ र र २ १ २ १ र १ र

अथा२३या। अथादित्यव्रते वयन्ता२३वा। अनागसोष

"रजोयुजः" ज्योतिर्भिर्युक्तस्य (ज्योतीरजउच्यतइतियास्कः ‡)

अत्यन्त तेजस्विनः "यस्य" इन्द्रस्य "इदं" पुरोवर्ति स्तोत्रयुक्तं

हविरस्ति तद्धविः "स्वः" स्वर्गे सर्वत्र वा "तुजे" दातरि ¶

"जने" यजमानविषये "वनं" यतो वननीयं सम्भजनीयं खलु।

अतः "इन्द्रस्य" दानं "रन्त्यम्" अत्यन्त-रमणीयं "बृहत्" प्रभूतं

भवति॥ ३ ॥ ३

* ऋ० १, २, १६, ५। † "बहुमानेनमयोरकः"—इति भा० मा०१,१,१०।

‡ "रजो रजतेः। ज्योती रज उच्यते। उदकं रज उच्यते। लोका रजांस्यु-च्यन्ते। असृगहनी रजसी उच्येते। "रजांसि चित्रा विचरन्ति तन्यवः"—इत्यपि निगमो भवति"—इति निरु० नै० ४, १९।

¶ तुजे इति तुञ्जतेर्दानकर्मणो रूपम् नै० ७. १०, ८।

२ ३ १  २  २र  १र  र
दितयेसिया२३मा३। हाउ। ३। आयुश्चक्षुर्ज्योतिः।
१र १ २  १  २  ४र र  ३ १११
औहोवा। ई२। या२३४। औहोवा। ई२३४५

॥ १३* ॥ ४

आद्ये ऋचो चतुष्पादे ह्येकपादयुतान्तिमा।
शौनःशेपो गार्त्समदो वामदेवोति ताः क्रमात्।
वारुणी पावमानी च वैश्वदेवीति संस्मृताः॥

हे "वरुण!" † "उत्तमम्" उत्कृष्टं शिरसि बद्धं "पाशम्" "अस्मद्" अस्मभ्यम् "उच्छ्रथाय" उत्कृष्टं शिथिलं कुरु। "अधमं" निकृष्टं पादेऽवस्थितं पाशम् "अव श्रथाय" अवाधस्तात् शिथिलीकुरु। "मध्यमं" नाभिदेशगतं पाशं "विश्रथाय" वियुज्य शिथिलीकुरु। "अथ" अनन्तरं हे "आदित्य" अदितेः ‡ पुत्र!

---

* आ० गा० १५०१, २, १२।

† "इत्थञ्च आदित्ये अन्यानि एते राजाना मित्रावरुणा विवासन्ति। चतुर्णं पन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु (ऋक् १०म० ६, ४, ४)"—इति मन्त्रलिङ्गात्—"अहोरात्रं मित्रावरुणौ (३का० ११अ० २२ख०)"—नैरुक्तभाष्याच्च मित्रशब्देन दिवा, वरुणशब्देन च रात्रिः सुपचः। "वरुणः वृणोतीति सतः (३का० १०अ०१ख०)"—इति श्रुत्पादनात् सर्वेषां घटपटादीनां तमोरूपेण आवरकत्व।

‡ "अदितिरदीना * * 'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्'—इत्यदितेर्विभूतिमाचष्ट एनान्यदीनानीति वा"—इति नैरुक्तम् २का० ४अ० २२-२३ख०। दितिः खण्डनं तदभावोऽदितिरिति निष्पन्नोऽर्थो भाष्यादि लभ्यः।

अथ पञ्चमी।

१ २ ३ १२ ३२ २
त्वयावयम्पवमानेनसोम

१ २ ३ १२ ३२ ३ १ २
भरेकृतंविचिनुयामशश्वत्।

१ २ ३ १२ ३२ २
तन्नोमित्रोवरुणोमामहन्ता

१ २ ३ १ २ ३ २ ३ २
अदितिःसिन्धुःपृथिवीउतद्यौः॥ ५॥ ५*

२ ३ १ १ ३२ २ ५ २
उपायपृष्ठ। पा। ओहा। ईश्या। (एवं त्रिः)।

२२ २ ३१ २ १२ २ १ २
त्वयावयम्पवमानेनसोमा। भरेकृतंविचिनुयामशाश्वात्।

३२ २ २३१ २ २ २
तन्नोमित्रोवरुणोमामहान्ताम्। अदितिःसिन्धुःपृथिवी

वरुण! "वयं" शुनःशेपाः "तव" व्रते त्वदीये कर्मणि "अदितये" खण्डन-राहित्याय "अनागसः" अपराध-रहिताः "स्याम" भवेम॥

"अथादित्यव्रतेवयन्तव"-"अथावयमादित्यव्रतेतव"—इति साम्न ऋचः पाठभेदः॥ ४॥ ४

* ऋ० ७, ४, २२, १। † "अपां मदंमाम"—इति आ० ब्रा० ७,१,१२।

उताद्यौः। हूपायप्रू। पा। ओहा। इ३या।
२। हूपायप्रू। पा। ओहा। इ२। या२३४।
औहोवा। ए। सुवः। २। ए। सुवा२३४५ः।

॥ ७* ॥

हूपायप्रू। पा। ओहा। (एवं त्रिः) । त्वयावयम्पवमाने
नसोमा। भरेकृतंविचिनुयामशश्वत्। तन्नोमित्रोवरु
णोमामहन्ताम्। अदितिःसिन्धुःपृथिवीउता। द्यौः।
हूपायप्रू। पा। ओहा। २। हूपायप्रू। पा।
ओ२। हा२३४। औहोवा। सुवः। ए१। सुवः।
ए२३४५॥ ८‡॥ ५

---

*,‡ चा० गा० १५० १, १, ७-८। † "समुद्रस्य सर्पसाम"—इति चा० गा० १.२.११।

अथ षष्ठी ।

३ १र २र १२उ ३ २
इमंवृषणङ्कृणुतैकमिन्माम् ॥ ६ ॥ ६

३ २र ३र र   ३ २   १   १ २
* इमाओवा । ३ । इमा३ । ओइ । २ । इमा

१   ५   ३ १र ३र र   ३ २   १
३ । ओ२३४वा । वृषाओवा । ३ । वृषा३ । ओइ ।

हे "सोम !"† पवमानेन पवित्रेण पूयमानेन "त्वया" सहायेन "भरे" [ सङ्ग्राम-नाम ( नै०२,१७,६ ) ] सङ्ग्रामे "प्रभूत्" बहु "कृतं" कर्तव्यं "वयं" "विचिनुयाम" विशेषेण कुर्याम । यस्मात्तव साहाय्येन कर्माणि कुर्मः "तत्" तस्मात्, अस्मान् "मित्रः वरुणः अदितिः" एतन्नामिकाः । "सिन्धुः"‡ एतदभिधाना । तथा "पृथिवी" "उत" अपिच "द्यौः" । एते मित्रादयः "नः" अस्मान् "मा" "महन्तां" पूजयन्तु धनादिदानेन ॥ ५ ॥ ५

* "वृषा"—इति चा० ग्रा० ३,२,१२ ।

† "सोमः सुनोतेः यदेनमभिषुण्वन्ति । बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन । तस्य पावमानीषु निदर्शनायोदाहरिष्यामः"—इत्यादि नैरुक्तम् ११अ० २ख० ।

‡ सिन्धुः समुद्रः । समुद्र इति चतुर्दशनामसु पञ्चदशम् पदम् नि० १, १ ।

अथ सप्तमी ।

१ २ १ २ ३ १ १ ३ १ २ ३ १ २
सनइन्द्राययज्यवेवरुणायमरुद्भ्यः ।

३ १२ ३२
वरिवोवित्परिस्रव ॥ ७ ॥ ७ *

१२ १ ५ २ २२ ३ २ १२ १२ १२
२ । वृषा३ । ओ२३४वा । णङ्कृणावता । एकाओ

२ ३२ २ १ ३२ ३ १ ५
वा । एका३ । ओइ । २ । एका३ । ओ२३४वा ।

२३ १११
इन्मा२३४५म् ॥ १३ † ॥ ६

१ ३ २ ३२ १२ २ २
‡ एजश्वा । तेजातमन्धसोदिविसद्भूमिया२द

१ १ १ २ २ २ १ १ २
दाइ । इडा । उग्रꣳशर्ममहा१ईश्रा३वाः । सानः ।

पूर्वस्या ऋचि प्रकृता हे मित्रादयो देवाः ! यूयम् "एकम्" अद्वितीयं दानकर्मणि "इमं" सोमं "वृषणं" कामाना मभिवर्षकं "कृणुत" कुरुत । तथा "इमां" क्रियां फलाभिवर्षिकां कुरुत ॥ ६ ॥ ६

---

* ऋ० ७, १, १८, १ ।

† आ० गा० १प० २,१, १३ ।

‡ "श्राकरवर्णम्"—इति आ० गा० १,२,१२ ।

१र  र  र  १  १  १ र
इन्द्राययज्यवेवरुणायमरु२त्क्षियाः। इडा। वरिवोवि

२  २  २  १  २  १र  र  र  र
त्परा१इस्रा३वा। आइना। विश्वान्ययआयुम्नानिमानुषा

१  र  र  १  १ २
२णाम्। इडा। सिषासन्तोवना२३होइ। माहा३१उ

१  १ १११ १
वा२३। इट्। इडा२३४५॥ १८ *॥ ७

गायत्री पावमानी तु मन इत्यादिके ऋचौ।
असहीयुस्तयोरेवं छन्दोदैवतनिर्णयः॥

हे सोम ! † "सः" "नः" "वरिवोवित्" धनस्य लम्भकस्त्वं "नः" अस्माकं "यज्वे" यष्टव्यायेन्द्राय "वरुणाय" ‡ "मरुद्भ्यः" ¶ च "परिस्रव" धारया क्षर॥ ७॥ ७

---

* आ० पा० १प० २, १, १९।

† "अथैषा परा भवति चन्द्रमसो वेनस्य वा"—इति नि० ३का० ११ख० ४ख०।

‡ 'वरुणः कवन्धं प्र ससर्ज (ऋ० ४,६,१३,४)' —इत्यादि-मन्त्र लिङ्गात् इह वरुणो मेघ-वर्षक-वरुणभूतः। "कवन्धोमेघम्"—इत्यादि निघ० दै० १०,४।

¶ "मरुतो मितराविणो वा, मितरोचिनो वा, महद्द्रवन्तीति वा इति नैरुक्तम् ३का० ११ख० १३०। 'वायु र्वै क्षेपिष्ठा देवता'—इति श्रुतेश्च। ततो मरुतो वायव इति सिद्धान्तः।

अथाष्टमी।

३१र २र १२३ १ २ ३ १ २
एनाविश्वान्यर्य आद्युम्नानिमानुषाणाम्।

१ २
सिषासन्तोवनामहे ॥ ८॥ ८

१र २ र र र १ २ २र
* हाउ। ३। उहातिजातमार२३म्भमा३ः। हाउ। ३।

१ र १ १ २र २ १
दिविसद्भूमियार२३ददा३इ। हाउ। ३। उग्रᳪशर्म महार२३इ

२ २ ३ ५ २र २ र १
अवाउ। वा३। ई२३४डा। हाउ। ३। सनइन्द्रायया

१ २र १ र १ २ २र
र२३ज्यवा३इ। हाउ। ३। वरुणायमरु२३द्भियाः। हाउ।

१ र १ २ १ ३ ५ २र
३। वरिविवित्परा२३इस्रवाउ। वा३। इ२३४डा। हाउ।

र र र १ २ २र २ र र
३। एनाविश्वानिआ२३र्य आ३। हाउ। ३। द्युम्नानिमा

१ २ २र २ र र १ २
नुषार२३णा३म्। हाउ। ३। सिषासन्तोवना२३महाउ।

१ १ ११११
वा३। इट्। इडा२३४५॥ १२ †॥ ८

---

* "अपत्यम"—इति आ० ब्रा० १.२.१२।

† आ० गा० २५० ३, १, १२।

अथ नवमी ।

३ १ २ १ २ ३ २ ३
अहमस्मि प्रथमजा ऋतस्य

१ २ ३ १ २ ३ १ २ ३ १ २
पूर्वं देवेभ्यो अमृतस्य नाम ।

२ ३ १ ० ३ २ ३ ३ १ २
यो मा ददाति स इदेवमाव

३ २ ३ ३ १ २ ३ १ २
दहमन्नमन्नमदन्तमद्मि ॥ ९ ॥ ९

॥ प्रथम-दशति ॥

२र १२र २ २ १ १२ १२
* हाउ । ३ । मेनूऽस्तर । ३ । दुस्त । रान् । ३ । दाने

१२ र २ २र २ र १
नादानम् । ३ । हाउ । ३ । अहमस्मि प्रथमजा ऋता२३

२ १ १ १ १ २र १२र २ २ १
स्या२३४५ । हाउ । ३ । मेनूऽस्तर । ३ । दुस्त । रान् । ३ ।

"एना" एनेनान्नेन सोमेन "मानुषाणां" मनुष्याणां "विश्वानि" "द्युम्नानि" अन्नानि "अर्यः" अभि गच्छन्तः † "सिषासन्तः" सम्भक्तुमिच्छन्तश्च वयं "वनामहे" भजामहे ॥ ८ ॥ ८

° अर्धम । अनुमाम । पृथग्गतिर्वा । विमांके वा—इति सा०ब्रा० ३,७,१० ।

† "अर्यः"—इति ईश्वर नामसु द्वितीये नैघण्टुकम् २,२२ । इह तु अन्यता- वित्यस्य रूपमिदम् ।

२ १२ १२१
अक्रोधिनक्रोधम्। २। अक्रोधिनक्रोधम्। हाउ। ३।

१२ २ २ १ १ १ १ १ १ १ २
पूर्वन्देवेभ्योअमृतस्यना २ ३ मा २ ३ ४ ५। हाउ। ३।

१२२ १ २ १ २ १ २ २२
सेतूꣳस्तर। ३। दुस्त। रान्। ३। अश्रयाश्रद्धाम्। ३।

१२ २ २ २ १ १ १ १ १ १२
योमाददातिसइदेवमा २ ३ वा २ ३ ४ ५ त्। हाउ। ३।

१२२ १ २ १ २१२२ १
सेतूꣳस्तर। ३। दुस्त। रान्। २। सत्येनानृतम्। ३।

२२ १ १ १ १ १ १ १ १५
हाउ। ३। अहमन्नमन्नमदन्तमा२३द्मी२३४५। हाउ।

२१११ २२१ २ १ १ २
३। वा। एषागतिः। ३। एतदमृतम्। ३। स्वर्गच्छ। ३।

१२ २ १२२ १२१२ २ १ १ १ १ १
ज्योतिर्गच्छ। ३। सेतूꣳस्तीर्त्वाचतुरा२३४५ः॥ २४ *॥ ९

त्रिष्टुभा अन्नदेवता आत्मान मेवाह आत्मा एव ऋषिः। "देवेभ्यः पूर्वं" अग्नि-वरुणादि-देवेभ्यः पुरा "अहम्" "अन्नम्" देवता "अमृतस्य" विनाश-रहितस्य "ऋतस्य" सत्यस्य पर-ब्रह्मणः सम्बन्धिनी "प्रथमजा अस्मि नाम" प्रथमत एवोत्पन्ना

* आ० १प० २, १, २४।

भवामि खलु । "यः" पुमान् "मां ददाति" अन्नरूपां माम् अति-थ्यादिभ्यो ददाति "स इत्" स एव "एवं" परिदृश्यमान-प्रकारेण "आवत्" अवति सर्वान् प्राणिनो रक्षति । यस्तु लोभ-युक्तः सन् प्राणिभ्योऽन्नमदत्वा स्वय मेव तदन्न मत्ति "अन्नम् अदन्तं" नाना-विधान्न-भक्षकं तं लोभिनम् अहमन्नम् अन्न-देवता "अद्मि" भक्षयामि विनाशयामीत्यर्थः ॥ ८ ॥ ९ ॥ *

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

* अत्राह यास्कः — आख्यातं दैवतं यस्मादर्थाचक्षाणकर्मणो नामगतिं व्याख्यास्यामः ॥ सूर्यं आत्मेत्युदितस्य हि कर्मद्रष्टा यैनदनुप्रवदन्त्यथैतं महान्तमात्मानमेषर्गणः प्रवदन्ती-न्द्रं मित्रं वरुणमग्निमाहुरित्यथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाचाग्निरस्मि जन्मना जातवेदा अहमस्मि प्रथमजा इत्येताभ्याम् ॥ १ ॥ अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतम् म आसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ अह-मस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम । यो मा ददाति स इदेवमावा-दहमन्नमन्नमदन्तमद्मि इति स च आत्मा प्रादुर्भवेत्तं व्याजहाराय समात्मानमध्या-त्मजमन्तिकमन्यस्मादित्याचक्षते ॥ २ ॥ अपश्यं गोपामनिपद्यमानमा च परा च पथि-भिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आ वरीवर्त्ति भुवनेष्वन्तः । आवरी-वर्त्ति भुवनेष्वन्तरित्यथैष महानात्मा सत्त्वलक्षणस्तत्परं तद्ब्रह्म तत्सत्यं तत्सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तदमृतं तच्छुक्लं तन्निष्ठो भूतात्मा । सैषा भूत-प्रकृतिरित्येके तत् क्षेत्रं तद्ज्ञानात् क्षेत्रज्ञमनुप्राप्य निरात्मकमथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी इति । कामद्वेषलक्षणत्यविशुद्धानस्य विशुध्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते प्रतिभाति लिङ्गो महानात्मा तमोलिङ्गो विद्या प्रकाशलिङ्गस्तमोऽपि लिङ्ग-

यस्मिन् आकाशः ॥ ३ ॥ आकाशगुणः शब्द आकाशाद्वायुर्द्विगुणः स्पर्शेन वायो
र्ज्योतिस्त्रिगुणं रूपेण ज्योतिष आपश्चतुर्गुणा रसेनाद्भ्यः पृथिवी पञ्चगुणा गन्धेन
पृथिव्या भूतग्रामस्थावरजङ्गमात्मदेतद्ब्रह्मगर्भस्थं जागर्ति यस्यां ते सुषुप्तस्थानानि
प्रत्याहरति भूतग्रामान् पृथिवी सापि यस्मिन् पृथिव्यप आपो ज्योतिषि ज्योतिर्वायौ
वायुराकाश आकाशो मनो मनो विद्यां विद्या महान्तमात्मानं महानात्मा प्रतिभां
प्रतिभा प्रकृतिं सा स्वपिति युगसहस्रं रात्रिस्तावतावहोरात्रावजस्रं परिवर्त्तेते स
कालस्तदेतदहर्भवति। युगसहस्रपर्यन्तमहर्यद् ब्रह्मणो विदुः रात्रिं युगसहस्रान्तां
तेऽहोरात्रविदो जना इति ॥ ४ ॥ तं परिवर्त्तमानमन्योऽनुप्रवर्त्तते स्रष्टा द्रष्टा विभ
क्तातिमात्रोऽहमिति गम्यते स मित्याद्यनेन पावकं महाभूतेषु शिरोणाकाशाद्वायोः
प्राणश्चक्षुषि वक्तारं तेजसोऽद्भ्यः स्वेदं पृथिव्या मूर्त्तिः। पार्थिवांस्त्वष्टौ गुणान्वि-
द्यात् चौम्मात्रतस्त्रीन् पितृतो ऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसशोणितानि मातृ-
तोऽन्नं पान मित्यष्टौ सोयं पुरुषः सर्वमयः सर्वज्ञानोपि सृष्टः ॥ ५ ॥ स यद्यनु-
रुध्यते तद्भवति। यदि धर्ममनुरुध्यते तद्देवो भवति यदि ज्ञानमनुरुध्यते तदमृतो
भवति यदि काम मनुरुध्यते स च्यवते। इमां योनिं सन्दध्यात्तदिदमेव मतम्---
संख्या रेतसः सम्भवति शं प्राणो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो
मेदसः स्नाना स्नायोरस्थीन्यस्थिभ्यो मज्जा मज्जातो रेतस्तदिदं योनौ रेतः सिक्तं पुरुषः
सम्भवति। शुक्रातिरेके पुमान् भवति शोणितातिरेके स्त्री भवति द्वाभ्यां समेन
नपुंसको भवति शुक्रभिन्नेन यमो भवति शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च
सत्कथमिदं शरीरं परं सम्पद्यते सौम्यो भवत्येकरात्रोषितं कललं भवति पञ्च-
रात्रेद्बुद्बुदाः सप्तरात्रात्पेशी द्विसप्तरात्रादर्बुदः पञ्चविंशतिरात्रः स्वस्थितो घनो
भवति मासमात्रात् कठिनो भवति द्विमासाभ्यन्तरे शिरः सम्पद्यते मासत्रयेण
ग्रीवाप्रदेशो मासचतुष्केण त्वगादयः पञ्चमे मासे नखरोमादयः षष्ठे मुख
नासिकाक्षिश्रोत्रं च सम्भवति सप्तमे चलनसमर्थो भवत्यष्टमे बुध्याध्यवस्यति नवमे
सर्वाङ्गसम्पूर्णो भवति ॥ मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः। नाना योनि
सहस्राणि मयोषितानि यानि वै ॥ आहारा विविधा भुक्ताः पीता नानाविधा-
स्तनाः। मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥ अवाङ्मुखः पीड्यमानो
जन्तुश्चैव समन्वितः। शाङ्ख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकमिति ॥ ततश्च
दशमे मासे प्रजायते जातश्च वायुना स्पृष्टस्तु स्मरति जन्ममरणम्। कर्म च

शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥ ६ ॥ अष्टोत्तरं सन्धिशत मष्टाकपालं शिरः सम्प-
द्यते षोडश वपापत्राणि नव स्नायुशतानि सप्तशतं पुरुषस्य मर्माणि अर्धचतस्रो रोमाणि
कोट्यो हृदयं ह्यष्टकपालानि द्वादशकपालानि जिह्वा पक्षौ। शुक्लपर्णौ तथोपस्थ-
हृदपायेतन् मूत्रपुरीषं कस्मादाहारपानसिक्तत्वादनुपचितकर्माणावन्योन्यं जायेते
इति। तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च सत्यज्ञानमपि तथौ जरामरण-
क्षुत्पिपासा-शोक-क्रोध-लोभ-मोह-मद-भय-मत्सर-हर्ष-विषादेर्ष्यासूयात्मकैर्द्वन्द्वैरभि-
भूयमानः शोकादार्जवं जवीभावात्मानमिमुच्यते शोकात्याग् महाभूमिकायच्छरीराणि-
मेषमात्रैः प्रक्रम्य प्रकृतिरधिपरीत्य तैजसं शरीरं कृत्वा कर्मणोऽनुरूपं फलं मनु-
भूय तस्य सङ्क्षये पुनरिमं लोकं प्रतिपद्यते ॥ ७ ॥ अथ ये हिंसा माश्रित्य विद्याम्
त्सृज्य महत्तपस्तेपिरे चिरंच वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूम मभि सम्भवन्ति
धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्ष मपक्षीयमाणपक्षाद्दक्षिणायनं दक्षिणायनात्
पितृलोकं पितृलोकाच्चन्द्रमसं चन्द्रमसो वायुं वायोर्वृष्टिं वृष्टेरोषधयस्तद्भुक्त्वा तस्य
सङ्क्षये पुनरेवेमं लोकं प्रतिपद्यते ॥ ८ ॥ अथ ये हिंसामुत्सृज्य विद्या माश्रित्य
महत्तपस्तेपिरे ज्ञानोक्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभि सम्भवन्त्यर्चिषोऽहरह्न आपू-
र्यमाणपक्ष मापूर्यमाणपक्षादुदगयनमुदगयनाद्देवलोकं देवलोकादादित्यमादित्या-
द्वैद्युतं वैद्युतान् मानसं मानसः पुरुषो भूत्वा ब्रह्मलोक मभिसम्भवति न ते पुनरावर्तन्ते
शिष्टा दन्दशूका यत इदं न जानन्ति तस्मादिदं वेदितव्य मथाप्याह ॥ ९ ॥ न तं
विदाथ य इमा जजानान्यद्युष्माक मन्तरं बभूव। नीहारेण प्रावृता जल्प्या
चासुतृप उक्थशासश्चरन्ति ॥ न तं विद्यया विदुषो यमेवं विद्वांसो वदन्त्यक्षरं
ब्रह्म पश्यन्ति नन्यद्युष्माक मन्तर मन्यदेषा मन्तरं बभूवेति नीहारेण प्रावृताकामयमा जल्प्या
चासुतृप उक्थशासः प्राणं सूर्यं यत्पथगामिनश्चरन्त्यविद्वांसः ये च तत्र महत्प्र वदन्त्यथा
यो विद्वांसः स वशोनु तपते तस्य तपसा सर्वाप्रमाद मेत्यघ्नमयो भवति तेषां भूतान
निर्वर्तेन सुखी भिक्षु देव ह्येवं मत्वा मन्त्रः सत्याजानाति भूतं भवद्भविष्यदिति। आत्मा
कस्माज्जायते स्वयं कस्माल्लुप्यते सर्व भूतेन्द्रियैः प्रेरते सर्वाभूतानि सेन्द्रियाणि प्रज्ञया
कर्म कारयति इति वा तस्य तपः प्रतिष्ठा ब्रह्म मुपयन्ति आत्मा ब्रह्मेति स ब्रह्मभूतो
भवति वाचमात्रो ब्रवीतीति यज्ञो ब्राह्मणः ॥" —इति १४,१—१०।

अथ द्वितीय-खण्डे—

सैषा प्रथमा।

त्वमेतदधारयः कृष्णासुरोहिणीषुच।

परुष्णीषु*रुशत्पयः॥ १॥ १० †

‡ हाउत्वमेतात्। एतदेतात्। आधारा२३४याः।

कृष्णासुरोहिणा१इषू२चा। परुष्णा२३ईषू। रुशत्। पा

२या२३४औहोवा॥२०॥

त्वमेतदोहाइ१ होइ। आधा१राया२ः। हाइ।

कार्ष्णा१सुरो२। होइ। हाइणी१षुचा२। होइ।

पारुष्णाइषू२। होइ। रुशत्। पा२या२३४औहोवा॥२१॥

हाईत्वमेतात्। आ। आधा१राया२ः। हाईका

र्ष्णा१सुरो२। हाइहाईणी१षुचा२। हाईपारुष्णा

* "पुरुष्णीषु"—इति क०। † ऋ० ७,६,२२,२।

‡ "वोचि गार्भ(?)वराचि"—इति गा० ग्रा० १, २, १५।

१ २१ १ २ ५र र २१
इष्२। आइ। रुशत्। पा२या२३४औहोवा। अभि

र २१ २१ र २र १र २१ २१ १११र
स्फूर्जयं द्विष्मः। समोषाभिस्फूर्जयं द्विष्मः। अस्मभ्यङ्गातु

१ २ ३ ११११
वित्तमा२३४५म ॥ २२ * ॥ १०

श्रुतकक्ष ऋषिरिन्द्रो गायत्री । अस्य सामर्थ्यमेवोपपादयति—हे इन्द्र ! "कृष्णासु" कृष्णवर्णासु गोषु तथा "रोहिणीषु च" ["वर्णादनुदात्तात्तोपधात्तो नः ( ४,१,३९ )"-इति ङीप् † ] "परुष्णीषु" रोहितवर्णासु [ "परुष्णी पर्ववतीति यास्कः ‡ ] पर्वगः पर्वणो नानावर्णासु च गोषु "रुशत्" [रोचतेर्दीप्तिकर्मणः ¶] दीप्यमानं श्वेतम् "एतत्" परिदृश्यमानं "पयः" क्षीरं त्वम् "अधारयः" धारयसि । तस्मात् तद्बलं पूजयाम इति समन्वयः ॥ १ ॥ १०

---

* आ० २प० २, २, १०—२२ ।

† अनुदात्तस्तु "वर्णानां तणतिनितान्तानाम् ( २ पा० १० सू० )"—फिट् सूत्रेण ।

‡ "इरावती परुष्णीत्याहुः पर्ववती भास्वती कुटिलगामिनी"—इति निरु० ९,२६ ।

¶ "रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः । पूर्वं मस्या यत्र मा च पावयद्द रथचरणाद्वा"—इति यास्कः नै० २,२०—नै० ६,१३ ।

अथ द्वितीया।

१२ १२३ १२४ ३१
अह्रुच्चदुषसः पृश्निरग्रिय

३१ २ ३१२ ३२
उक्षामिमेति भुवनेषु वाजयुः।

३ १२ ३१ २
मायाविनो ममिरे अस्य मायया

२१२ १२३ २३१२
नृचक्षसः पितरो गर्भमादधुः॥ २॥ ११ *

२र १ १ १र२
† हाउ। ३। स्वर्विश्वम्। ३। अह्रुच्चव्।

२१ १ २र १ २
।३। उषसःपृश्निरा २ग्रायाः। हाउ। ३। स्वर्विश्वम्। ३।

१र १र २१र १ २र १
उक्षामिमे। ३। तिभुवनेषुवा २जायूः। हाउ। ३। स्वर्वि

१ १र र २ १र १ २र
श्वम्। ३। मायाविनः। ३। ममिरे अस्यमा २याया। हाउ

१ १ १ १ २१र १
।३। स्वर्विश्वम्। ३। नृचक्षसः। ३। पितरोगर्भमा २दा

* उ० २,२,१६,२।

† "सर्व्वाग्निचो है"—इति चा० ब्रा० ३,२,२६।

२र १ २ १ २ २
धूः। हाउ।३। स्वर्विश्वम्।२। सुवा२३र्विश्वाउ। वा३।

२ १ १ १ १ १
ए३। सुवा२३४५ः॥ ८*॥

२र १र २ १ र २ १
हाउ।३। ज्योतिर्विश्वम्।३। अरूरुचत्।३। उष

२ ४ ५ २र १र २
सःपृश्निरा३। अयाः। हाउ।३। ज्योतिर्विश्वम्।३।

१ र १र १ र २ ४ ५ १र
उक्षामिमे।३। त्रिभुवनेषुवा३। जायूः। हाउ।३।

१र २ १र र २ १ र २
ज्योतिर्विश्वम्।३। मायाविनः।३। ममिरे अस्यमा३।

४ ५ २र १र २ १ २
या या। हाउ।३। ज्योतिर्विश्वम्।३। नृचक्षमः।३।

२ १ र २ ४ ५ २र १र २
पितरोगर्भमा३। दाधूः। हाउ।३। ज्योतिर्विश्वम्।२।

१र २ २ १र ३ १ १ १ १ १
ज्योता२३र्विश्वाउ। वा३। ए३। ज्योती२३४५ः॥१०†॥२२

अरूरुचदिति त्वेतां पवित्रो द्दष्टवानृषिः।
पवमानो देवता स्याच्छन्दश्च जगती स्मृता॥

"उषसः" सम्बन्धी "पृश्निः" आदित्यः ‡ [ "पृश्निरादित्यो

---

*,† आ० गा० २प० ३, १, ९-१०।

‡ "तथापि निगमो भवति 'समुद्रोऽर पृश्नो नः' इत्युपस मखा समार आप षाष्टवर्षीदमवरवादापि"—इति निरु० नै० २,१४।

भवति प्राश्नुत एनं ( नै० २,१४ ) वर्णः"-इति नैरुक्ताः ] "अग्रि-यः" अग्रगी मुख्यः सोमः * "अरूरुचत्" रोचयति। सः "उक्षा" जलस्य सेक्ता पर्जन्यः सन् "मिमेति" भृशं शब्दायते। "भुव-नेषु" भूतजातेषु "वाजयुः" तेषा मन्न मिच्छन्। "मायाविनः" माया प्रज्ञा तद्वन्तो देवाः "अस्य" सोमस्य "मायया" प्रज्ञया "ममिरे" निर्मितवन्तः [ सोमस्य एकैकांश-पान-वशात् अग्न्या-दयः स्व-स्व-व्यापारेण जगत् सृजन्तीत्यर्थः ]। तस्यास्य मायया "नृचक्षसः" नृणां द्रष्टारः "पितरः" पालकाः देवाः † अङ्गिरसः‡ पितरो वा "गर्भम्" "आ दधुः" धारयन्ति ओषधीषु। [ स चात्र सूर्य्यात्मा सोमः स्तूयते। सूर्यरश्म्यनुगमाधीनवर्द्धना-च्चन्द्रस्य। यद्वा। अयमुषसः पृश्निः सविता अरूरुचत् रोचयति रोचते वा सर्वं शिष्टं समानं तत् सम्बन्धिनो नृचक्षसो नृणां द्रष्टारः पितरो जगद्रक्षकाः रश्मयो गर्भ मादधुर्वृष्ट्यर्थम् ॥

"मिमेतिभुवनेषु" - "बिभर्तिभुवनानि"—इति साम्न ऋचः पाठ-भेदः ॥ २ ॥ ११

---

* "आपणमनेनेति वा शरणेनेति वा पापमस्मादिन इति वा। अपिवाप मित्येतद-मर्थक मुपबन्ध माददीत"—इति निरु० नै० ६,१९।

† "पिता पाता वा पालयिता वा"—इत्यारभ्य "पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः"-इत्यन्तं यास्कः नै० ४,२१।

‡ "अङ्गारेष्वङ्गिराः। अङ्गारा अङ्कना अञ्चना"-इतिनिरु० नै० ३,१७।

अथ तृतीया ।

२ ३ १२ ३ २ ३ १ २ १ १ २ ३ १ २
इन्द्रइद्धर्य्योः सचासम्मिश्लआवचोयुजा ।
१ २ ३१ २ ३ १ २
इन्द्रोवज्रीहिरण्ययः ॥ ३ ॥ १२ *

१ २ १२र १ र २ १ १ १ २१र २
। इन्द्रमिद्गाथिनोबृहत् । ए२ । इन्द्रमर्कॆभिः । अर्किः
१ २र र र र र र र र २र १ ५ २
णावा । औहोवाऔहोवाऔहोवा । औहोहाइ । ३। इन्द्रं
र र १ २ २ ५ २र १ र र
वाणीरनू२३पताउ । वा३ । ई२३४डा । औहोवा । ३ । औ
१ २ २ १ २ २ र १
होहाइ । ३ । इन्द्रइद्धर्यॊ२३ःसचा३ । सम्मिश्लआवचोर२३यु

हयोर्मधुच्छन्दा वैश्वामित्रः द्रष्टा स्यार्द्द गायत्री छन्दः इन्द्रो देवतेति । "इन्द्र इत्" इन्द्र एव "हर्योः" हरिनामकयोरश्वयोः † "सचा" सह युगपत् "आ सम्मिश्लः" सर्वतः सम्यङ्मिश्रयिता । कीदृशयोः हर्योः? "वचोयुजा" इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः ‡ । अयम् "इन्द्रः" "वज्री" वज्रयुक्तः "हिरण्ययः" हिरण्मयः ¶ सर्वाभरणोपेतइत्यर्थः ॥ ३ ॥ १२

---

* उ० ३, १. ८, ३=ऋ० १. १, १२. २—३ ।

† "यवयम्"—इति था० ब्रा० ३.६.१३ ।

‡ "हरी इन्द्रस्य"—इति नि० नै० १, १५. १ ।

¶ "ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि"—इति पा० ६. ४, १७५ ।

अथ चतुर्थी।

२ ३ १ २ ३ १ २
इन्द्रवाजेषुनोवसहस्रप्रधनेषुच।
३ १२३ १ २३ १ २
उग्रउग्राभिरूतिभिः ॥ ४ ॥ १३ *

२ २र र र २र १ २ २ र र १
जा३। औहोवा। ३। औहोहाइ। ३। इन्द्रोवजाहि
१ ५ २र र र २र
रा२३ण्ययाउ। वा३। ई२३४डा। औहोवा। ३। औ
१ २ २ र र१ २
होहाइ। ३। इन्द्रवाजेषुनो२३अवा३। सहस्रप्रधना
२ २र र र २र १ २ १ र
२३इषुचा३। औहोवा। ३। औहोहाइ। ३। उग्रउग्रा
१ २ २ १ ११११
भिरू२३तिभाउ। वा३। इट्। इडा२३४५ ॥ ११ ॥ १२.१३

हे "इन्द्र"! "उग्रः" शत्रुभिरप्रधृष्यस्त्वं "उग्राभिः" अप्र-धृष्याभिः "ऊतिभिः" अस्मद्रक्षणपराभिः "वाजेषु" युद्धेषु † "नः" अस्मान् "अव" रक्ष तथा "सहस्रप्रधनेषु च" सहस्र-सङ्ख्याक-गजाश्वादि-लाभयुक्तेषु महायुद्धेष्वपि रक्ष ॥ ४ ॥ १३

* ऋ० ८, ८, ३९, १।

† आ० गा० १प० ३, १, ११।

‡ "वाजे"—इति सप्तमासमस्तु द्विचत्वारिंशत्तम संग्राम कम २ १७।

अथ पञ्चमो। *

१ २ ३ १　१ २ ३ १ २ ३ १ २
प्रथश्चयस्यमप्रथश्चनामा
३२　३ १ २ ३ २
नुष्टुभस्यहविषोहविर्यत्।
३ १ २२　३ २ ३ १ २
धातुर्द्युतानात्सवितुश्चविष्णो
३ १ २२ ३ १ २
रथन्तरमाजभारावसिष्ठः॥ ५॥ १४ *

† हाउप्राथाः। चयस्यमप्रथः। चना२। माइउवा३। हुंहा। ३। ऊवा२। ओ२३४वा। हु२३४डा। आनुष्टुभस्य हविषः। हवा२इः। याइउवा ३। हुंहा। ३। ऊवा२ ओ२३४वा। हु२३४डा। धातुर्द्युतानात्सवितुः। चवा-२इ। ष्णाइउवा३। हुंहा। ३। ऊवा२। ओ२३४वा। हु२३४डा। रथन्तरमाजभारा। वमा२इ। ष्ठाइउवा३। हुंहा। ३। ऊवा२। ओ२३४वा। हु२३४डा। ए३। द्युत्॥ ५॥

* ऋ० १, ८, ७, २।　† "वसिष्ठस्य द्वौ" इति आ०ब्रा० १,२,१९।

१ २ १ २ २
प्राथाः। चयस्वमप्रथः। चना२। मा३१उवार२३।
१२२ १ २ १२ २ ५
इडा। ३। होइ। हो। वाहा३१उवार२३। ई२३४हा।
१२ २ १ २ १ २ १२२
आनुष्टुभस्यहविषः। हवा२इः। या३१उवार२३। इडा। ३।
१ २ १२ २ ५ १२१ २ १२
हाइ। हो। वाहा३१उवार२३। ई२३४हा। धातुर्द्युताना
१ २ २ १२२
त्सवितुः। चवा२इ। ष्णा३। उवा३। इडा। ३।
१ २ १२ २ ५ २ १
होइ। हो। वाहा३१उवार२३। ई२३४हा। रथन्तर
२ १२ २ १ १ २ १२२
माजमारा। वसा२इ। ष्ठा३१उवा३इ। इडा। ३।
१ २ १२ २ ५ १ १२
होइ। होवाहा३१उवार२३। ई२३४हा। ए३। द्यूता
१ १ १ १
२३४५ः॥ ६ †॥ १४

अपश्यत् प्रथइत्येतां त्रिष्टुभं प्रथनामकः।
वैश्वदेवीं भवेदेवं छन्दो दैवतनिर्णयः॥

"यस्य" वसिष्ठस्य "प्रथः" नाम पुत्रः यस्य भरद्वाजस्य "स प्रथः नाम" पुत्रः तयोर्मध्ये "वसिष्ठः" मम पिता "अनुष्टुभस्य" अनुष्टुप् छन्दसा युक्तस्य "हविषः" घर्माख्यस्य "यद्धविः" हविष्टा

† आ० गा० २प० ३, १, ५—६।

अथ षष्ठी।

३ १ २   ३ १ २ ३ २   ३ १ २
नियुत्वान्वायवागह्ययꣳ शुक्रो अयामिते।
१ २   ३ १ ३ २
गन्तासि* सुन्वतो गृहम्॥ ६॥ १५

२र   २ १   २ १   २   २ १
†इ।उ।३। शुक्रम्।३। शुक्रꣳशुक्रम्।३। शुक्रꣳ
२   २ १ १ २   २ र र   १ १
शूक्रम्।२। शुक्रꣳशूक्रम्। नियुत्वान्वायाऽ३वागा१
२ र १ २   १ र
ही२। अयꣳशुक्रा आऽ३यामा१ता२इ। गन्तासि
१ २   १र   २ १   २
सुन्वाऽ३तोगृ२ह्वा२३म्। हाउ।३। शुक्रम्।३। शु-
१ २   २ १   २   ३ २ १ २
क्रꣳशुक्रम्।२। शुक्रꣳशुक्रम्। शुक्रꣳशूक्रम्।२

पादकं "रथन्तरं" साम तद्रथन्तरं "धातुः" धातृसञ्ज्ञाद्देवात्‡ "द्युतानात्" द्योतमानात् सवितुश्च¶ विष्णोश्च§ "आजभार" आहृतवान्। [ द्वयहोभं इति भत्वं रथशब्दोपपदात् तरतेः संज्ञायां भृतृवृजीति खच्। अरुर्द्विषदजन्तस्येति मुमागमः॥ ५॥ १४

---

* "गन्तासि"—इति क०।

† "शुक्रम्"—इति चा० ब्रा० ३,२,१९।

‡ 'धाता-विधाता' सर्वस्य इति नैरुक्तम् ३का० ११ख० १०अ०।

¶ 'सविता सर्वस्य प्रसविता' इति नैरुक्तम् ३का० १०ख० ३१अ०।

§ 'विष्णु र्विशतेर्वा व्यश्नोतेर्वा'—इत्यादि नैरुक्तम ३का० ११ख० १५अ०। एवञ्च विष्णुशब्देन सर्वव्यापी सर्वान्तर्यामीति सिद्धान्तः।

अथ सप्तमी ।

१ २र ३ १ २ ३ १ २
यज्जायथा अपूर्व्य मघवन् वृत्रहत्याय ।
१ २ ३ १ २ ३ १ ० ३ १ २र
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतोदिवम् ॥ ७ ॥ १६ *

॥ द्वितीय-दशति ॥

३ २ १ ३ ५र र २र ३ १
शुक्रम् । शू२ । क्रा२३४ । औहोवा । ए । शुक्रम् ।
हु ॥ ७ † ॥ १५

नियुत्वानिति गायत्र्या ध्येयं गृत्समदोऽब्रवीत् ॥

हे "वायो" ! ‡ "नियुत्वान्" नियुतो वाहनानि [ वायोः नियुतोरिति (१,१५,१०) निघण्टुः ] तैर्युक्तस्त्वं "आगहि" आगच्छ । "अयं" "शुक्रः" दीप्यमानः सोमः ते तुभ्यं "अयामि" [ यामेः कर्मणि लुङि रूपम् ] नियतो गृहीत आसीत् यतः 'सुन्वतः' सोमाभिषवं कुर्वतो यजमानस्य "गृहं" "गन्तासि" यातोसि ॥ ६ ॥ १५

---

* ऊ० ९, १, १९, १=ऋ० ६, ४, १२, ५ ६-७- ऊह्य १, २, १६=१, १, ६= ३, २, १६ ।

† आ०ग्रा० २प० ३, २, ७ ।

‡ 'वायुर्वातेर्वेते र्वास्याद् गति कर्मणः' इत्यादि भैरुक्तम् १का० १०१.१ख० ।

२र र        १२ १    २    २  १    १
* एयज्जायथाः । अपूर्विया । हाउ । मघवन्वृ । हा-
२   १र    २    २  १    १   १
उ । त्रहत्याया । हाउ । तत्पृथिवीम् । हाउ । अ-
१    २    २र र र  र १ २    २ १
प्रथयाः । हाउ । एऔहोवादीशाः । तदस्तम्नाः ।
२   २ र १    २    २र र २    १
हाउ । उतोदिवाम् । हाउ । एऔहोवा३ । अम्
१ १ १
पया२३४५ः ॥ ९ ॥

२र र    र    २र १    १    १   १
एहाउयज्ञायथाः । अपूर्विया । होइ । ३ । हाउहाउ-
१  २ १   १   २    १ १र
हाउ । मघवन्वृ । होइ । ३ । हाउ३ । त्रहत्याया ।
१   २   २ १   १   २
होइ । ३ । हाउ३ । तत्पृथिवीम् । होइ । ३ । हाउ
२ १   १    २   २र र र १ १
३ । अप्रथयाः । होइ । ३ । हाउ३ । एऔहोवादीशाः ।
२ १   १   २   २ र १   १
तदस्तम्नाः । होइ । ३ । हाउ३ । उतोदिवाम् । होइ ।
२   २र र र   र   १ १ १ १
३ । हाउ३ । एऔहोवा३ । अम्पया२३४५ः ॥ १० ॥

वायोः षट् साराणि—इति सा० आ० १, २, १९ ।

३५ख,

२र र १र १ र २ र १
एहाउ। औहो२। यज्जायथा३ः। अपूर्विया। हो
१ १ १ र १ १
वधा२३होइ। मा। घवन्वृत्रहत्याया। होववा२३हो
१ १ र १ १ २र र
इ। तात्। पृथिवीमप्राथया:। होववा२३होइ। एऔ
र र १ १ १ १ १ १ र र
होवाटीग्राः। होववा२३होइ। तात्। अस्तभ्नाउतो
१ १ २र र र १ र
दिवाम्। होववा२३होइ। एऔहोवा३। हस्इडापया
१ १ १ १
२३४५ः॥ ११॥

१ १ १ १ १र र २ २ १ १
याज्जायाज्जा। यथाअपूर्वियाऔ३हो। हा२इया।
२ २ १ र २ १ १ १ २
औ३हो। माघवन्वृत्रहत्यायाऔ३हो। हा२इया। औ३
१ १ र १ २ १ १ २ १
हो। तात्पृथिवीमप्राथयाऔ३हो। हा२इया। औ३हो।
१ र र २ २ १ १ २
तादस्तभ्नाउतोदिवा। मौ३हो। हा२इया। औ
र र १ १ १११
३होवाहाउवा३। पया२३४५ः॥ १२॥

२ १र १ १ १ २ १ १ १ १ १ १
ऊ। वौहो१इ। ३। यज्जायथाः। अर्विपूया। म

द्यावन्व। अचत्याया। नत्पृथिवीम। अप्राथयाः। त

दस्तम्भाः। उतोदिवाम्। ऊ। वौहो१इ। २। ऊ।

वौहो१२। उऊवा३हाउ। वा३। हस्॥ १३॥

योरयिंवोरा३यिन्तमाः। योद्युम्नार२३४इद्युं। म्नाव

त्तमार२३ः। सोमःसु२३४ता। माइन्द्रतायेउ। अस्ति

स्वा२३४धा। एतें३। मा२३४दाः। उऊवा६हाउ। वा।

अस्॥ १४॥

* हाउहोहाइ। ३। अन्तरिक्षमुर्वदिवमाग। न्मा।

(त्रिः)। परात्परमैरय। ता। परात्पर। मैरय। ता।

परात्परमैरय। त। औहोवाहाउ। वा। ए। यज्ञो

दिवोमूर्धादिवमादनोघर्मोज्योतिः॥ १५॥

* "विश्वोज्योतिर्भ्राजोसि" — इति आ० आ० ३, ३, १८।

१र र २ १ २ १ २ १
हाउहोहाइ।३। अन्तरिक्षꣳसुवर्दिवञ्जग। न्मा।

१ र र २ १ १र र २
(त्रिः)। परात्पर मैरय। ता। परात्पर मैरय।

१ १र र २ २ १र ३र २
ता। परात्पर मैरय। त। औहोवाहाउ। वा।

२र २ १ २ १र र २ १र २ १र२र १ र २र
ए। पृथिव्यन्तरिक्षन्द्यौरापःकनिक्रदात्सिन्धुरापोमरुतोमा

र १र र
दयन्ताङ्घर्मोज्योतिः॥ १६॥

१र र १र २ १र र र
हाउहोहाइ (इत्यादिपूर्वपाठः) ता। दिवोमूर्द्धानꣳ

र १ १ २ ३ ५ १ र २ १र र
स मैरयन्। होये३। हो२३४वा। यशोघर्मोज्यो

र २ १ २ ३ ५ १र र
तिः। यशःसमैरयन्। होये३। हो२३४वा। तेजो

२ १र र १र र २ १ २ ३
घर्मोज्योतिः। तेजःसमैरयन्। होये ३। हो २ ३

५ १ २ १र र १ र २ १ २
४वा। सुवर्घर्मोज्योतिः। सुवःसमैरयन्। होये३।

२ ५ १र २ १र र १र र १
हो २ ३ ४ वा। २। ज्योतिर्घर्माज्योतिः। ज्योतिःसमैर

१ २ २ २ १ २ १र र
यन्। होये३। हो२३४५वा६५६। घर्मोघर्मोज्यो

तिः॥ १७॥

* हाउहोहाइ (इत्यादि) ता। औहोवाहाउ। वा

ए। इडायच्छ हस्कृतिंयच्छ। ए। मनओजोयच्छ। ए। मनो

महिमानंयच्छ। ए। यशस्विपिंयच्छ। ए। प्रजवर्चायच्छ।

ए। पशून्विशंयच्छ। ए। ब्रह्मक्षत्रंयच्छ। ए। स्वर्ज्योति

यच्छ ॥ १८ ॥

हाउहोहाइ। (इत्यादि) ता। यज्जायथा। अ

पूर्व्याया। मघवन्वृत्रहत्याया। या। तत्पृथिवीमप्राथा

याः। तदस्तभ्नाउतोदाइवाम्। हाउहोहाइ (इत्या

दि) त। औहोवाहाउ। वा। ए। तंजोघर्मःसङ्गी

डन्तेगिरामतीर्वायुगोपास्तेजस्वतोमरुद्भिर्भुवनानिचक्रदुः।

इट् इडा२३४५। ई२३४५ ॥ १८ ॥

* 'प्रज्ञ नगानम्'—इति व्याः आ० ३, १, ३, १८

१र २ १र र २ १ १र
हाउहोवा। ३। परात्यरमैरय। ता। परात्य
र १ १ १र र २ २ १र २र २
रमैरय। ता। परत्परमैरय। त। औहोवाहा
१ १ २ २र १ १र र २र १
उ। वा। इन्द्रो। धेनुः। ३। आपो धेनुः।
१र २र १ २ १ २र १ १र
३। भूमि र्धेनुः। ३। अन्तरिक्षंधेनु। ३। द्यौ
२र १ १ २र २ १ २र १
र्धेनुः। ३। परं धेनु। ३। व्रतं धेनु। ३।
२ १ २र १ १ २र १ १ र
सत्यं धेनु ३। ऋतं धेनु। ३। इडा
२र १ १ २र १ १र २र १
धेनुः। ३। स्व र्धेनुः। ३। ज्योति र्धेनुः।
३ ॥२०॥

१र र १S २ १र २र
हाउहोवा। ३। (इत्यादि) ता। यज्ञा यथाः।
२१र र २१र २ १ १ ० ५ १ २
अपूर्विया।. अपूर्वियाउ। आपूर्वा२३४या। मघवन्‌वृ।
११ र२ २१ र २ १ २ १ ५ १
त्रहत्याया। त्रहत्यायाउ। त्राहत्या२३४या। तत्पृ
२१र र २ १ २ १ २ ३ ५
थिवीम्। अप्रथयाः।· अप्रथयाउः। आप्राथा२३४याः।
१ १ र २१र २ १ २ २ १ २
तदस्तभ्नाः। उतोदिवाम्। उतोदिवा३म्। ऊतो

हा२३४इवाम्। हाउहोवा। ३॥ (इत्यादि) न।
औहोवाहाउ। वा। तेजोधर्मःमह्नौडन्तेवायुर्गोपास्ते
जस्वतीमन्त्रिर्भुवनानिचक्रदुः॥ २१॥

हा२ऊवाक्। ३। होवा। २। होवा३। हाउवा।
ए। तोकम्प्रजाङ्गर्भो नेयमदध्मत्त्वाचपराचपथिभिश्चर-
न्ता२३४५ः॥ २२॥

* हा२ऊवाक्। ३। होवा। ३। अयꣳमग्निङ्ते३।
होइ। यस्माद्यावापृथिवी भुवनानिचक्रदुः। हो
इ। अयꣳसग्निङ्ते३। होइ। यस्मादापऔषधयोभुव
नानिचक्रदुः। होइ। अयꣳमग्निङ्ते३। होइ। यस्मा
त्समुद्रियाभुवनानिचक्रदुः। होइ। अयꣳसग्निङ्ते३।
होइ। यस्माद्विश्वाभूताभुवनानिचक्रदुः। होइ। हा

* "यज्ञमानम्" — इति आ० ग्रा० २,१,१९।

१ १ १ १ २र १ १
२ऊवाक्। ३। होवा३। हाउवा। ए। आपः। २।
३ १११२
आपा२३४५ः॥ २३॥

१ १ १ १ २र ३ २र १
हा२ऊवाक्। ३। होवा। ३। येभिर्वियां। अमैरा
२र ३ १र १ २र र १
या२ः। तेभिर्वियां। अदीमादा२म्। येभिर्भूताम्।
३ २ १ १र १र २ १र २ १र २र १
सद्यःमाहा२ः। तेभिस्तेजआपः। आपा२। येभिर्व्यं
२१र २ २ २र १ २ १ ३
न्तरिक्षमैरया३ः। हाउवा। ए। आपः। २। आपा
१ १ १
२३४५ः॥ २४॥

१ १ १ १ १ र र
हा२ऊवाक्। ३। होवा। ३। यज्जायथा। अ
१ १ १ १
पूर्वो२। वींया२। मघवन्वृत्रहाहो२। त्याया२। तत्
र १ १ र
पृथिवीमप्राहो२। थायाः२। तदस्तभ्नाउताहो
१ १ १ १ २
२इ। दाइवा२म्। हा२ऊवाक्। ३। होवा। २।
२ २ २र १र र २ १ र १ र १
होवा३। हाउवा। ए। तेजोघर्मःसङ्क्रीडन्तेभि

२र र १ र २र१र २र १ २१ २र १ १ १ १ १
शुमतीर्व्यायुगोपास्तजस्तवीर्मह्निभुवनानिचक्रदू २ ३ ४ ५:
॥ २५ * ॥ १६

नृमेध-पुरुमेधौ ह्यार्षयौ ऐन्द्री अनुष्टुभः ॥

हे "अपूर्व्य" त्वत्तोऽव्यतिरिक्तेन पूर्वेण वर्जित ! † । हे "मघवन्" मंहनीयतम धनवन्निन्द्र ! "वृत्रहत्याय" ‡ वृत्रासुरहननाय "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोसि "तत्" तदानीमेव "पृथिवीं" प्रथमानाम् "अप्रथयः" प्रसिद्धां दृढाम् अकरोः। "उत" अपि च "दिवं" द्यां द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धाम् अकार्षीः ॥ ईदृशं वीर्यं त्वदन्यस्य न भवतीत्यर्थं द्योतयितुम् अपूर्व्येति पदम् ॥ ७ ॥ १६

इति श्रीमत्सायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे
छन्दोव्याख्याने पञ्चमस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

* आ० मा० ४प० ३, ७, ८—२४ ।

† 'अपूर्व्य पूर्वं मघवन्नादिकारणं विद्यमाना'—इति १प०२,७, ऋषिभिः माधवः। 'यतः पूर्वं नास्ति सा अपूर्वा, अपूर्वा एव अपूर्व्या, स्वार्थिकस्तद्धितः, प्रथमेत्यर्थः'—इति च मन्त्रे वि० ।

‡ 'अथास्य कर्म—रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत्'—इति नैरुक्तम् ७का० १०ख० । 'वृत्रवधो मेघवधः'—इति च तत्रत्य-भाष्यम् । "तत्को वृत्रो मेघ इति नैरुक्ताः । त्वाष्ट्रोऽसुर इत्यैतिहासिकाः । अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति"—इति निरु० नै०२,१६ ।

अथ तृतीय-खण्डे —

सैषा प्रथमा ।

१ २ १ २ २ ३ १ २र २ २ ३ १ २र
मयिवर्च्चोअथोयशोथोयज्ञस्ययत्पयः ।
२ २ ३ १ २ ३ १ २र
परमेष्ठीप्रजापतिर्दिविद्यामिवदृ(ृ)हतु ॥ १ ॥ १७*

२र १ १ १
† हाउ। ३। आनो२ब्रवाइ। २। आनो२ब्र
१ ३ ५र र १ २र र ३र ३ १ १ १ १
वा। २। यार३४औहोवा। रक्षतनोरक्षितारा२३४५ः।
२र १ २र र १ २र र
हाउ। ३। आनो२ब्रु (पूर्वपाठः) गोपायतगोपायि
र ३ १ १ १ १ २र १ १ २ १ २
तारा२३४५ः। हाउ। ३। आनो२ब्रु०। मयिवर्चः।
१ २ १ २र १ १ २ २
अथोया१शा२ः। अथोयश। स्ययात्पा१या२ः। पर
र १र १ २ २ १ र १ २
मेष्ठी। प्रजापा१ती२ः। दिविद्यामि। वदृ(ृ)हा१तू२
२र १ १ २र र २ १
३। हाउ। ३। आनो२ब्रु०। रक्षतनोरक्षितारा२
१ १ १ २र १ २र र १ २र र
३४५ः। हाउ। ३। आनो२ब्रु०। गोपायतगोपायि

* ऋ० ८,७,१७,७। † "प्राजापत्यस्य व्रतम्" — इति आ०ब्रा०१,२,२०।

अथ द्वितीया।

२ ३ २　３１２ ३ २ ३

मन्त्रे पयाꣳसिसमुयन्तुवाजाः

१र　२र　３१ २

संवृष्ण्यान्यभिमातिषाहः।

२ ३ १ १ १ १　३र　१　२र　१

तारा२३४५ः। हाउ। ३। आनो२ब्र०। ए। रक्ष

२र　र र र र १　२र र　र　२र　१

तनोरक्षितारोगोपायतंगोपायितारः। २। ए। रक्ष

२र　र र र र　र२र र　र ३१११

तनोरक्षितारोगोपायतगोपायितारा२३४५ः॥ ७*॥ १७

वामदेवऋषिः प्रोक्तो मयीत्यस्याः प्रजापतिः।

देवता स्यात्तमच्छन्दोऽनुष्टुप् मयदृतोरितम्॥

"परमेष्ठी" परमे लोके तिष्ठतीति परमेष्ठी "प्रजापतिः" † "दिवि" द्योतमाने स्वर्गे "द्यामिव" द्योतमानां कान्ति मिव। "मयि" अस्मदीये शरीरे "वर्चः" तेजः ब्रह्माख्यं "दृंहतु" वर्द्ध-यतु। "अथो" अपिच "यशश्च" दृंहतु। "अथो" किञ्च "यज्ञस्य" यागस्य सम्बन्धि अतएव सं उत्तमं "पयः" हविर्लक्षण मन्नं च दृंहतु॥ १॥ १७

* आ० गा० ४प० ३, १, ७।

† 'प्रजापतिः प्रजानां पाता पालयिता वा'—इत्यादि नैरुक्तम १का० १०ख० ४२, ४१ ख०।

२ १ २ ३ १ २
आप्यायमानोअमृताय सोम
३ १२ २२ ३ १ २
दिविश्रवाꣳस्युत्तमानिधिष्व॥२॥१८ *

१२ २ १२ २ १ १ २
† ओवा२। ३। सन्तेपया। सो३समु। यन्तु
४२ ५ २ २ २ १ २२ ३ ४२ ५
वाजाः। संवृष्णियया। नो३अभि। मातिषाहाः।
१२ १२ २ २ २२ ३ ४२ ५ २ १
आप्यायमा। नो३अमृ। तायसोमा। दिविश्रवा।
१ १ २२ ३ ४ ५ १२ १
सो३उत्त। मानिधिष्वा। ओवा२। २। ओ२।
३ ५२ २
वा२३४। औहोवा। ३॥ ८ ‡॥

१ २ १२ १ १ १ ३ ४२ ५
¶ ई२। ३। सन्तेपया। सो३समु। यन्तुवाजाः।
२ १२ २ १ १ २ ४२ ५ २२ १२
संवृष्णियया। नो३अभि। मातिषाहाः। आप्यायमा।
२ १ १२ २ ४२ ५ २ १२ २ १ १२ ३ ४
नो३अमृ। तायसोमा। दिविश्रवा। सो३उत्तमानिधि
५ १ १ २ ५२ २ १
ष्वा। ई२। २। ई२आ२३४औहोवा। एꣳ॥११ §॥१८

---

* ऋ० १, ६, २१, २। † "सोमव्रतम्"—इति आ० ग्रा० ३.३,१०।

‡ आ० गा० ३प० ४, १. ८।

¶ "सोमव्रतम्"—इति आ० ग्रा० ३, २. १४।

§ आ० गा० १प० ५, १, ११।

अथ तृतीया ।

२ ३ १र २र ३ १ २ २ ३ १ २ ३ १
त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
१र २र ३ २१ १ २ ३ १ २र ३ १र २र
त्वमा ततनोरुर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ३॥१९

२र २ ३र १र
* हाउ । ३ । होवा३ । ३ । हाइ । होवा३ ।
२र ४ २ १११ ४ १
३ । होवा३ । ३ । हो३वा३४५ । २ । हो३वा३४ ।
५र र १ र र २र र १ २र १ २ १र १
औहोवा । त्वमिमा ओषधीः सोम विश्वाः । त्वमपो अज

त्रिष्टुभः पावमान्यः स्याद्दृषिर्गौतमनामकः ।

हे "सोम !" "अभिमातिषाहः" अभिमातीनां शत्रूणां हन्तुः "ते" तव एवम्भूतं त्वां "पयांसि" अपणार्थानि क्षीराणि "संयन्तु" सङ्गच्छन्ताम् । तथा "वाजाः" हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्ताम् । "वृष्ण्यानि" वीर्याणि च सङ्गच्छन्ताम् । हे "सोम !" त्वम् "अमृताय" आत्मनः अमृतत्वाय अमरत्वाय "आ" समन्तात् वर्धमानः सन् "दिवि" नभसि स्वर्गे "उत्तमानि" उन्नततमानि उत्कृष्टानि "श्रवांसि" अन्नानि अस्माभिर्भोक्तव्यानि हविर्लक्षणानि "धिष्व" धारयते । [ "क्रियाग्रहणं कर्तव्यमिति (पा० २, ३,१३) कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी । ॥ २ ॥ १८

° "होमत्रतम्"—इति शा० ब्रा० २,१ २५ ।

† "चतुर्थ्यर्थे बहुलं छन्दसि"—इति पा० २, ३, ६२ ।

१ र १ र ३र १ १ १ र २र १ र
नयस्त्वङ्गाः। त्वमातनोरुर्वन्तरिक्षं । त्वञ्ज्योतिषावितमो
१ २र २ ३र १
ववर्थं। हाउ। ३। हौवा३। ३। हाइ। हौवा
२र ४ १ १ १ १ ४
३। ३। होवा३। ३। होइवा३४५। २। होइ
१ २र र २र १ २ १ २ १र २
वा३४। औहोवा। ए। जनद्दिवमन्तरिक्षम्पृथिवीवि
१ र २ १र २र र १ १ १ १ १
श्वभोजसम्पुरुरूपाअजीजनः। इट्। इडा२३४५॥१०*॥१९

हे "सोम !" "त्वम्" "इमाः" भूम्यां वर्तमानाः "विश्वाः" सर्वाः "ओषधीः" "अजनयः" उत्पादितवानसि। तथा "त्वम्" "अपः" तासा मोषधीनां कारणभूतानि वृष्ट्युदकानि अजनयः। तथा त्वं "गाः". सर्वान् पशून् † उदपादयः। "उरु" विस्तीर्णम् "अन्तरिक्षं" "त्वम्" "आ तनोः" विस्तारितवानसि। तस्मिन्नन्तरिक्षे यत् "तमः" अस्मद्दृष्टि-निरोधकम् अन्धकारं तदपि "त्वं" "ज्योतिषा" आत्मीयेन प्रकाशेन "वि ववर्थ" विशिष्टं कृतवानसि। [ववर्थ वृञ् वरणे लिटस्थलि, "बभूथाततन्यजग्टभ्मववर्थेति" (पा०७,२,६४) निपात्यते॥

"आतनोः"—"आततन्थ"—इति साम्न ऋचः पाठो॥३॥१९

---

* आ० गा०३प० ४, १, १०।

† "अथापि पशुनामेव भवत्येतस्मादेव"—इति निरु० नै० २,५।

अथ चतुर्थी ।

अग्निमीडेपुरोहितंयज्ञस्यदेवमृत्विजम

होतारꣳरत्नधातमम् ॥ ४ ॥ २० *

† मनोहाउ । वयोहाउ । वर्चोहाउ । अग्निम् । ईडारइ । पुरोहा२३४इताम । इहहाउ । इडाहाउ । आयुर्हाउ । यज्ञ । स्यदा२इ । वमृत्वी२३४जाम् । स्वर्हाउ । ज्योतिर्हाउ । ऋतꣳहाउ । होता । रꣳरा२३ । त्नधा३ता५मा६५६म् । ए३ । महा२३४५ः ॥ १३ ॥

¶ हाउ३वा । अग्निमीडेपुरोहितम् । देवेषुनिधिमाꣳअहम् । हाउ३वा । यज्ञस्यदेवमृत्विजम् । देवेषुनिधिमाꣳअहम् । हाउ३वा । होतारꣳरत्नधातमम् । दे

* ऋ० १,१,१,१ । † मवां व्रताविमम् ( आ० गा०३,२,११ ) । ‡ आ० गा०३प० ४, १, १३ । ¶ यमव्रतायम ( आ०गा०२,१,११) ।

१र २ १र २ १ ५ २ऽ १र २र१र २ १र
वेषुनिधिमा ऽ३ अदम्। हाउइवा। ए। देवेषुनिधिमा ऽ३
२ १
अदम्। (एवं त्रिः)॥ १८ *॥ २०

अग्नि मीळे मधुच्छन्दा गायत्रेषाग्नि-संस्तुतिः।

"अग्नि"-नामकं "देवम्" "ईळे" स्तौमि [ ईड स्तुताविति (अदा०आ० ) धातुः मन्त्रस्यास्य होत्रा प्रयुज्यमानत्वात् अहं होता स्तौमीति लभ्यते] कीदृशम् अग्निम्? "यज्ञस्य पुरोहितं" यथा राज्ञः पुरोहितः तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्? "होतारम्" ऋत्विजम् [देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव। तथाच श्रूयते— "अग्निर्वै देवानां होतेति"। पुनरपि कीदृशम्? "रत्नधातमं" यागरूपाणां रत्नानाम् अतिशयेन धारयितारं पोषयितारं वा †। अत्राग्नि-शब्दस्य यास्को बहुधा निर्वचनं दर्शयति— "अथातोनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामो अग्निः कस्मादग्रणी भवति, अयं यज्ञेषु प्रणीयतेऽङ्गं नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्ठीवि र्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायतइति शाकपूणिरितादक्ताद्दग्धाद्वानी तास्स खल्वेते रकार मादत्ते गकारमनक्ते र्वा दहते र्वा नीः परस्तस्यैषा भवति(७,४,१)"इति॥ ४॥ २०

* आ० ग्रा० १प० ४,१,१८।

† यास्कस्त्वमुमेवं व्याख्यातवान्—"अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञश्च। देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो

अथ पञ्चमी।

१ २     १ २उ   २ १  २
ते मन्वत प्रथमन्नाम गोनां

२   ३ १ २ ३ १ २  ३२
त्रिः सप्त परमन्नाम जानन्।

१  २  ३ १ २क २र   ३ २
ता जानतीरभ्यनूषत क्षा

३ १ २   ३ १र  ३र३  १ २
आविर्भुवन्नरुणीर्यशसा गावः॥ ५॥ २१

२र      २र ३र     २  ३ ३
* हाउ। ३। गावोहाउ। ३। वृषभपत्नीर्हाउ। ३।

---

भवतीति वा यो देवः सा देवता। होतारं ह्वातारं। जुहोतेर्होतेत्यौर्णवाभः। रत्नधातमम् रमणीयानां धनानां दातृतमम्"—इति ७, १५। "पुरोहितः पुर एनं दधति"—इति च यास्कः २, १२॥ अत्र ऋचि स्वरसन्निवेशविधानप्रकारमित्थम्-आह दीक्षितः—"नवाग्निशब्दोऽव्युत्पत्तिपक्षेऽपि फिषरत्यन्तोदात्तः व्युत्पत्तौ तु नि-प्रत्यय-स्वरेण। अम्। तस्मादनुदात्तः अमिपूर्वरत्येकादेशस्य एकादेश उदात्तेनोदात्त इत्युदात्तः। ईळे। तिङ्ङतिङ इति निघातः। संहितायां तूदात्तादनुदात्तस्येकारः स्वरितः। स्वरितात् संहितायामिति ळे इत्यस्य प्रचयापरपर्याया एकश्रुतिः। पुरः शब्दोऽन्तोदात्तः पूर्वाधरा-वराणामित्यसि प्रत्ययस्वरात्। हित-शब्दोऽपि धाञो निष्ठायां दधातेर्हिरिति आदेशे प्रत्ययस्वरेणान्तोदात्तः। पुरोऽव्ययमिति गति-सञ्ज्ञायां कुगतीति समासे समासान्तो-दात्ते तत्पुरुषे तुल्यार्थेत्यव्यय-पूर्वपद-प्रकृतिस्वरेण गतिकारकोपपदात् कृदिति कृदु-त्तरपद-प्रकृतिस्वरे थाथादिस्वरे च पूर्वपूर्वापवादेन प्राप्ते गतिरनन्तर इति पूर्वपद-प्रकृतिस्वरः। पुरः-शब्दोकारस्य संहितायां प्रचये प्राप्ते उदात्तस्वरितपरस्य सन्नतर इत्याद्यनुदात्तः। ऋत्विक् शब्दः कृदुत्तर-प्रकृतिस्वरेणान्तोदात्तः। होतृ-शब्दस्तृन्-प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। रत्न-शब्दो नञ्विषयस्येत्याद्युदात्तः रत्नानि दधातीति रत्नधाः। समासस्वरेण कृदुत्तरपद-प्रकृतिस्वरेण चान्तोदात्तः। तमपः पित्वादनुदात्ते सति स्वरितप्रचयावित्यादि सर्वमूह्यम्"—इति दी।

* "अवा ग्ने"—इति आ० गा० ३, २, २१। तत्र पूर्वेषु।

वैराजपत्नीर्हाउ। ३। विश्वरूपाहाउ। ३। अस्मासुरम

ध्व९हाउ। ३। तेमन्वतप्रथमन्नामगो२नाम्। त्रिःसप्त

परमन्नामजा२नान्। ताजानतीरभ्यनूषता२ हाः। आ

विर्भुवन्नरुणीर्यशसागा२वाः। हाउ। ३। गावोहाउ।

३। वृषभपत्नीर्हाउ। ३। वैराजपत्नीर्हाउ। ३। विश्वरूपा

हाउ। ३। अस्मासुरमध्व९हाउ। ३। अस्मासुरमध्वा३९

हाउ। वा। ए। गावोवृषभपत्नीर्वैराजपत्नीर्विश्वरूपा

अस्मासुरमध्वम्। २। ए। गावोवृषभपत्नीर्वैराजपत्नीर्वि

श्वरूपाअस्मासुरमध्वा२३४५म्॥ १७ *॥

† हाउ। ३। तेमन्वतप्रथमन्नामगो। नाम्। ३।

हाउ। ३। त्रिःसप्तपरमन्नामजा। नान्। ३। हाउ३।

ताजानतीरभ्यनूषता। हाः। ३। हाउ। ३।

---

* आ० गा० रप० ४, १, १७।

† "गवां व्रते"—इति आ० गा०३,१,१७। तत पूर्वम्।

२र १　　　२　　　२　　　१　　　१　　　१
आविर्भुवन्नरुणीर्यशसागा । वाः । २३ । वाउ३ । वा ।
२र　१　२र　　　२र　　१ २ १ १ १ १
ए । दुघाः । २ । ए । दुघा२३४५ः ॥ १८ * ॥ २१

त्रिष्टुभा वामदेवोऽस्तौदग्निं तेमन्वतेति च ।.

हे "अग्ने !" "ते" स्तोत्रं कुर्वाणा अङ्गिरसः "गोनां" † गवां वाचां ‡ सम्बन्धि नाम स्तुति-साधकं शब्दमात्रं "प्रथमं" पूर्वम्, "अमन्वत" अजानत पश्चात्तस्या वाचः सम्बन्धीनि "त्रिःसप्त" एकविंशतिसङ्ख्याकानि "परमं" परमाण्युत्कृष्टानि "नाम" नामानि स्तुति-साधकानि स्तोत्राणि [ जातावेकवचनम् ¶ ] छन्दांसि वा [ तानि च गायत्र्यादीनि जगत्यन्तानि सप्त §, अति-जगत्यादीनि अतिधृत्यन्तानि सप्त ||, कृतिप्रभृतीन्युत्कृतिपर्यन्तानि सप्त + ] 'जानन्' अजानन् अलभत एवंविधच्छन्दोयुक्तैर्मन्त्रै रग्निमस्तुवन्नित्यर्थः । "ताः" वाचः "जानतीः" सर्वं जानत्यः "उषाः" [ त्रियन्ति गच्छन्त्युषः कालं प्रापयन्ति ताः ] "अभ्यनू-

* आ० गा० १प० ५,१,१८ ।

† "गोः पादान्ते ( ७, १, ५७ )"—इति पा० ।

‡ "गौः"—इति वाङ्नामसु चतुर्थं नैघण्टुकम् ( १,११ ) ।

¶ "जात्याख्यायामेकवचनं बहुवचनमन्यतरस्याम्"—इति पा० १,२,५८ ।

§ गायत्री, २ उष्णिक्, ३ अनुष्टुप्, ४ बृहती, ५ पङ्क्तिः, ६ त्रिष्टुप्, ७ जगती ।

|| अतिजगती, २ शक्करी, ३ अतिशक्करी, ४ अष्टिः, ५ अत्यष्टिः, ६ धृतिः, ७ अतिधृतिः ।

+ कृतिः, २ प्रकृतिः, ३ आकृतिः, ४ विकृतिः, ५ संकृतिः, ६ अतिकृतिः, ७ उत्कृतिः ।

अथ षष्ठी।

१ २ १र २र २ १
समन्यायन्त्युपयन्त्यन्याः
१ २ १ २ २ ३क२र
समानमूर्वं नद्यस्पृणन्ति।
१ २ २ २ १ २ २ १ २
तमू शुचिꣳ शुचयोदीदिवाꣳस
२ १र २र २ १ २ २ १ २
मपान्नपातमुपयन्त्यापः॥ ६॥ २२ *

षत" अस्तुवन्। ततः सूर्यस्य "यशसा" तेजसा सह "अरुणीः" अरुणवर्णाः "गावः" † "आविर्भुवन्" प्रादुरभूवन्। यद्वा "ते" अङ्गिरसः "प्रथमं" पुरातनं "नाम" एहि सुरभि गुग्गुलु-गन्धिनीति धेनु-नामधेयम् "अमन्वत" उच्चारयामासुः। पश्चात् स्व-भूतानि पणिभिरपहृतानि त्रिःसप्त-रत्नान्यविन्दन्। तत उच्चारितं जानत्यो "गावः" "अभ्यनूषत" हम्भारवलक्षणं शब्द-मकुर्वत। तदानीं उषाः प्रादुरभूदिति॥

"तेमन्वतप्रथमन्नामगोनान्त्रिःसप्तपरमन्नामजानन्। ता-ञ्जानतीरभ्यनूषतक्षाआविर्भुवन्नरुणीर्यशसागावः"—इति छन्दो-गाः। "तेमन्वतप्रथमन्नामगोनान्त्रिःसप्तपरमन्नामजानन्। ता-ञ्जानतीरभ्यनूषतक्षाआविर्भुवंन्धेनोस्त्रिःसप्तमातुःपरमाणिविन्दन्। तज्जानतीरभ्यनूषतव्राआविर्भुवदरुणीर्यशसागोः" — इति बह्वृ-चाः॥ ५॥ २१

* ऋ०८,७,१४,१।

† "अरुणो गाव उषसाम्"—इति निघ० १, १५,७।

२र　१र २　२१ र १　२र१
* हाउ। ३। ऐरयत्। ३। अपःसमैरयत्। ३। भूत
र २　२ र र र २र र र
मैरयत्। ३। अपाङ्गर्भोग्निरिडा। पाङ्गर्भोग्निरिडा। २।
२ र र र १ र २ १ १
पृथिव्यागर्भोग्निरिडा। ३। समन्व्यायन्त्युपयन्तियार२३न्याः।
२र१र २ १ २ १र र र २ १
समानमूर्वन्नद्यस्पृणा२३न्ती। तमुशुचिꣳशुचयोदीदिवा२
२ १ १र र २ १ २ १र
३ꣳसाम्। अपान्नपातमुपयन्तियार२३पाइः। हाउ। ३।
१र २ २ १ र र २र१र २ २र
ऐरयत्। ३। अपःसमैरयत्। ३। भूतमैरयत्। ३। अपा
र र २र र र २ र र र
ङ्गर्भोग्निरिडा। पाङ्गर्भोग्निरिडा। २। पृथिव्यागर्भोग्निरिडा
१ र र र . २ १र २ १
।२। पृथिव्यागर्भोग्निरिडा ३। हाउवा। ए। अग्निःशुचि
२ १ १र २ १ २ १ १र १र २ १ २ १ २र
शुक्रः। ए। शुक्रःशुचिशुक्रः। ए। तेजःशुक्रस्यशुक्रम्। ए।
१र २१र र १र २र १र२१२र१२र१ २र १ र २
तेजःसम्राःसमीचीः। ए। तेजउपोनजारः। ए। सुवर्ज्योती
१ १ २ १
२३४५ः॥ २॥

२र १र २ १र१ १
हाउ। ३। ऐरयन्। ३। समैरयन्। ३। सम
१ १ र १ १ २ १र१र
स्वरन्। ३। समन्व्यायन्त्युपयन्तियार२३न्याः। समानमूर्व

* "अपां व्रते द्वे"—इति ब्रा० भा० १,१,११।

२ १ २ १र र र २ १
न्नद्यस्पृणा२३न्ती। तमूशुचिᳲशुचयोदीदिवा२ ३ ᳲ
२ २१र र २ १ २ २र १र
साम्। अपान्नपातमुपयन्तिया२३पा३ः। हाउ। ई। ऐर
२ १ र २ १ २ १ २
यन्। ३। समैरयन्। ३। समस्वरन्। २। समस्वरा३न्।
२ २ १ १ १ १
हाउवा३। ई२३४५॥ ४ *॥ २२

तृतीयं त्रिष्टुबाग्नेयो दृष्टा गृत्समदेन सा।

"अन्याः" वर्षाणाः "आपः" "संयन्ति" भूम्यां सङ्गच्छन्ति "अन्याश्च" "पूर्वं" तत्रावस्थिताः "उपयन्ति" उपगच्छन्ति। ताः सर्वा आपः "समानं" सह "नद्यः" नदीभूत्वा "ऊर्व" समुद्र-मध्ये वर्तमानं वडवानलं "पृणन्ति" प्रीणयन्ति [पृण प्रीणने(प०) तौदादिकः] "तमु" तमेव "अपान्नपातम्" "शुचिं" निर्मलं "दीदिवांसं" दीप्यमानं [दीदिवेति छान्दसो दीप्तिकर्मा लिटः क्वसुः॥ वस्वेकाजाद्घसा मिति नियमादिड भावः। छन्दसीवेति वक्तव्य मिति वचनाद्दिवचनाभावः] एवम्भूतं "शुचयः" शुभ्राः "आपः" "उपयन्ति" समीपे गच्छन्ति॥

एष हि वैद्युताग्निरूपेण मेघे वर्तमानोऽस्मान् अजीजनदिति बुध्वा वडवानलरूपेण वर्तमानं तं पर्युपासत इत्यर्थः। यद्वा अन्या

* आ० गा० १प० ४, १, १-४।

एकधनाख्या * आपः संयन्ति। चात्वालोत्करयोर्मध्ये † वसतीवरीभिः सङ्गच्छन्ते। अन्या वसतीवर्याख्या आपश्च ‡ उपयन्ति उपगच्छन्ति एकमत्यं प्राप्ता भवन्ति। एताश्च मिलिता यज्ञं साधयन्त्यः तत्साध्य-वृष्टि-द्वारा नद्यो भूत्वा जवं पृणन्तीत्यादि समानम्। एवं हि आपो वा अस्पर्धन्त वयं पूर्वं यज्ञं वक्ष्याम इत्यादिको बह्वृच-ब्राह्मण-विनियोगश्चानुगृह्यते॥

"अपामपातमुपयन्त्यापः"—"परितस्थुरापः"—इति साम-ऋचः पाठ-भेदः॥ ६॥ २२

* "सोमकण्डनाय यैर्जलमानीयते ते कुम्भा एकधनाः। एकं धनं सोमरूपं यवेति"—इति वेददीपः (य० मा० भा० म० ५ अ० ७ क०)।

† "उत्तरवेदिनिष्पत्त्यर्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते"—इति वेददीपः (य० मा० भा० म० ५ अ० ७ क०)। "स्फ्योत्खातां मृदमुत्करे त्यजेत्"—इति वेददीपः (य० मा० भा० म० १ अ० २५ क०)।

‡ "अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणम् स्यन्दमानानामनस्तमितेऽस्तमिते निनाह्यात् गृहीत्वा ईजानस्य हवीजानोऽन्यस्यापि समीपावस्थितस्य पूर्वेजानस्योभयाभावे उल्मुकं हिरण्यं वोपर्युपरि धारयन् गृह्णीयादिति"—इति का० सू० ८, ९, ७-१०। अग्नीषोमीयस्य पशोर्वपामार्जनपर्यन्ते कर्मणि कृते वहन्तीनामपामेकदेशात् वसतीवरीसञ्ज्ञानां सोमार्थानामपां ग्रहणं कार्यं हविष्मतीरिति (य० मा० भा० म० ६ अ० २३ क०) मन्त्रेण। यदि रविरस्तङ्गतो यजमानश्च पुरा ईजानः सोमयाजी तदा गृहे एव निनाह्यात् कलशात् वसतीवरीग्रहणम् निनयनीयो निनाह्यः। यदि च यजमानः पुरा न सोमयाजी तर्हि समीपस्थितस्य यष्टुः कलशात् ग्रहणम् तस्य अन्यस्य च यज्ञकर्तुरभावे उल्मुकं कनकं वा वहन्तीनामपां समीपे धारयन् वहन्तीभ्यो वसतीवरीर्गृह्णीयादिति सूत्रार्थः॥

अथ सप्तमी ।

१र २र १ १ -२ १ १र २र १ १ २र
आप्रागाद्भद्रायुवतिरह्नः केतूंत्समीर्त्सति ।
१ १ १ १ १ १ १ १ १ २ १ २ २ १ १ २
अभूद्भद्रानिवेशनीविश्वस्य जगतोरात्री ॥ ७ ॥ २३ *

१ १र २ २ २ १र २ १ १
† हो २ इ । ३ । आप्रागाद्भद्रायुवतिः । हो २ इ । ३ ।
१ १र १र २ २ १ १ २ १ १र २ १र १र
अह्नःकेतूंत्समीर्त्सति । हो २ इ । ३ । अभूद्भद्रानिवेशनी ।
१ १ १ १ १र १र १र १ १
हो २ इ । ३ । विश्वस्यजगतोरात्री । हो २ इ । २ । हो २ ।
२ २ २ १ १ १ १
वा ३ । आउवा ३ । ई २ ३ ४ ५ ॥ ६ ‡ ॥ २३

अस्तौदनुष्टुभा रात्रिं वामदेव ऋचानया ।

"भद्रा" सूर्यप्रकाशसन्तापं निवारयन्ती सुखकरी "युवतिः" तमसो मिश्रयित्री¶ "रात्रिः" "आ प्रागाद्" आभिमुख्येन प्रगच्छति । "अह्नः"§चन्द्रमसः "केतून्" रश्मीन् "समीर्त्सति" सम्यक्सम्बन्धयितु

---

* ऋ०४,५,१०,१ ।

† "रात्रे इनरम्"—इति आ०गा०२,१,२१ ।

‡ आ०गा०३प०५,२,६ ।

¶ युवतिरिति मिश्रणार्थ-यौते रूपम् ; तथाचैवमर्थः प्रकृति-सम्बन्धः ।

§ "चन्द्रनामान्युत्तराणि द्वादश । अह्नः कलाकुपात्रमन्यस्मिन् कर्माणि"—इत्यादि निघ० नै० १, १० ।

अथाष्टमी।

१ २ ३ १ २ ३ २ ३ २उ ३
प्रत्नस्य वृष्णो अरुषस्य नू महः
२ ३ १ २ ३ १ २ ३ १ २
प्र नो वचो विदथा जातवेदसे।
३ १ २ ३ १र २र ३ २ ३
वैश्वानराय मतिर्नव्यसे शुचिः
१ २ ३ १ २ ३ १ २
सोम इव पवते चारुरग्नये॥ ८॥ २४ *

२र १ १ २ २
† हाउ। ३। ऊ२। २। ऊ२। वा३। हाउवा३।
१ २१ २ १ र र २१ र २ १र
हस् हस् हस् अर्चिः शोचिस्तपो हरः। प्रत्नस्य वृष्णो अरुषस्य नूमा
२ १ र र र र २ १र २ १र र १र
२३ हाः। प्रनोवचोविदथाजातवेदा२३साइ। वैश्वानराय
२ १र र १र र र २ १ २
मतिर्नव्यसे शू२३चीः। सोमइवपवतेचारुरग्ना२३या३इ।

मिच्छति च। अतएव "भद्रा" कल्याणी रात्री "विश्वस्य" सर्वस्य "जगतः" "निवेशनी" निवेशकारिणी "अभूत्" भवति। अहनि स्व-स्व-व्यापारात् खिन्नान् सर्वप्राणिनः स्वाश्रयेषु स्वापयतीत्यर्थः॥ ७॥ २३

* ऋ० ४,८,१६,१।

† "विष्णोर्व्रतम्"—इति आ०ग्रा०१,२,११।

१र १र १ऽ २ १ १
हाउ। ३। ऊ२। २। ऊ२। वा३। हाउवा३। ई२
१११
३४५॥ ७ * ॥

२र २र ३र २र ३र २र २ र १
† हाउहाउहाउ। ओहा। २। ओहाइ। वयोहाइ।
२र १ २ १ २र १ २र १
३। पयोहाइचक्षुर्हाइ। ३। श्रोत्रꣳहाइ। ३। आयुर्हाइ।
२र १ २ र १ २र र १ २
३। तपोहाइ। ३। वर्चोहाइ। ३। तेजोहाइ। ३। सुव
१ २र १ २१ र २र१
र्हाइ। ३। ज्योतिर्हाइ। ३। पृक्षस्यवृष्णोअरुषस्यनूमा२३-
२ १र र र र१२र २ २र र १र
हाः। प्रनोवचोविदथाजातवेदा२३साइ। वैश्वानरायमति
१ १र २ १र र र ०१ २ १र
र्नव्यसेशूर२३चीः। सोमइवपवतेचारुरग्ना२३या३इ। हाउ
र ३र २र ३र २र २ र र २ र १
२हाउ। ओहार। ओहाइ। वयोहाइ। ३। पयोहाइ।
२ १ २र १ २र १
३। चक्षुर्हाइ। ३। श्रोत्रꣳहाइ। ३। आयुर्हाइ। ३।
२ र १ २ र १ २ र १ २ १
तपोहाइ। ३। वर्चोहाइ। ३। तेजोहाइ। ३। सुवर्हा
२र १ २र १ २ ५र र
इ। ३। ज्योतिर्हाइ। २। ज्योतिर्हा२। वा२३४औहो

* आ० मा०३प० ४, १, ७।
† "मधा॥ि ग्नावरवन्तं हे"—इति आ० मा० १,१,१८। तत्र पूर्वम्।

१र २ १ २ १ र २ २र २ १ १र २ १र २ १ १
वा। ए। अग्निःसमुद्रमाव्ययन्। ए।' अग्निमूर्द्धाभवद्दिवः।
२र २र १र २ १ १ र १र र र २ १ १ १ १
ए। आयुर्द्धाऽस्मभ्यंवर्चोधादेवेभ्या२३४५ः॥ २ *॥ २४

वैश्वानरं जगत्यास्तौद्भरद्वाजो बार्हस्पत्यः।

"प्रक्षस्य" सम्पृक्तस्य व्याप्तस्य [ यद्वा पृक्षं हविर्लक्षण मन्नं† तद्वतः ] "वृष्णः" सेक्तुः "अरुषस्य"‡ आरोचमानस्य "वैश्वानराय"¶ "महः" पूजायुक्तं बलं तेजो वा "नु" क्षिप्रं स्तौमि। अत एव "नः" अस्मदीयं "वचः" वचनं "विदथे" यागे §"प्रयच्छति" स्तौतीत्यर्थः। "जातवेदसे" जातप्रज्ञाय जातधनाय|| वा तमुद्दिश्येत्यर्थः। उक्तमेव प्रकारान्तरेणादरादाह—"नव्यसे" नवतराय "वैश्वानराय" अग्नये "शुचिः" निर्मला स्तोतॄणां

---

* आ० गा० ३प० ६, १, २।

† "पृक्षः"—इति अन्ननामसु पञ्चमं नैघण्टुकम् २, ७।

‡ "अरुषीरारोचमानाः"—इति निरु० दै० ६, ७।

¶ वैश्वानरः कस्माद् विश्वान् नरान् नयति विश्व एनं नरा नयन्तीति वापि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः। तस्यैषा भवति ० ० ० इतो जातः सर्वमिदमभिविपश्यति वैश्वानरः संयतते सूर्य्येण राजा। यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्यामेति। तत्को वैश्वानर मध्यम इत्याचार्य्या वर्षकर्मणा ह्येनं स्तौति"—इति निरु० दै० १, २१-२२।

§ "विदथः"—इति यज्ञनामसु पञ्चमं नैघण्टुकम् ३, १७। "विदथानि वेदनानि। विदथानि प्रचोदयन्नित्यपि निगमो भवति"—इति नि० नै० ६, ७।

|| "जातवेदाः कस्माज्जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जात-

शोधयित्री वा "चारुः" कल्याणी "मतिः" मननीया स्तुतिश्च "पवते" मत्सकाशात् प्रभवति स्वयमेव गच्छतीत्यर्थः। "सोमः इव" यथा सोमो दशापवित्रात् स्रवति तद्वदित्यर्थः *॥

"प्रचस्य"- "पृचस्य"—इति "मह:"-"सह:"—इति, "प्रनोवोच"-"प्रनुवोचम्"—इति, "जातवेदसे"-"जातवेदस:—इति, "नव्यसे"—"नव्यसि"—इति च साम्न ऋचः पाठभेदः ॥ ८ ॥ २४

---

वेदसो जातवेदस्त्वमिति ब्राह्मणं तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्तीति च तस्यैषा भवति ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति-दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः। जातवेदस इति जातवेदसे वैवं जातवेदसेऽर्चाय सुनवाम सोममिति प्रसवायाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थमस्मान् निदहाति। निश्चयेन दहति भस्मीकरोति सोमो ददिदित्यर्थः। स नः पर्षदतिदुर्गाणि विश्वानि दुर्गमानि स्थानानि नावेव सिन्धुं नावा सिन्धुं सिन्धुं नावा नदीं जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति दुरितानि तारयति। तस्यैषा परा भवति॥ प्रनूनंजातवेदसमश्वंहिनोतवाजिनम्। इदन्नो बर्हिरासदे। प्रहिणुत जातवेदसं कर्मभिः समश्नुवाम अपि वोपमार्थे स्यादश्वमिव जातवेदसमितीदन्नो बर्हिरासीदत्विति तदेतदेकमेव जातवेदसङ्गायत्रं तृचं दशतयीषु विद्यते। यत्तु किञ्चिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते स न मन्येतायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी जातवेदसी उच्येते। ततो नु मध्यमः। अभिप्रवन्त समनेव योषा इति तत्पुरस्ताद्व्याख्यातमथासावादित्य उदुत्यञ्जातवेदसमिति तदुपरिष्टाद् व्याख्यास्यामो यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते अयमेव सोऽग्निर्जातवेदा निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते"—इति निरु० दै० १. १९—२०।

* "दशापवित्रेण परिषच्यैष ते योनिरिति पवमानमिति का० ९, ५, २५। दशापवित्रेण गृहीतं पयः परिषच्य पात्राद्विनिर्गतं सोमं मार्जयित्वा एष ते योनिरिति मन्त्रेण पयस्य सादनं करोति। वीप्सा सर्वपयार्था इति सूत्रार्थः॥

अथ नवमी।

१ २ ३ १ २र ३ २
विश्वे देवा मम शृण्वन्तु यज्ञ-
३ १र २र ३ १र २र३ १ २
मुभे रोदसी अपां नपाच्च मन्म।
२ ३ १ २ ३ १ २
मा वो वचाꣳसि परिचक्ष्याणि
३ २उ ३ १ २
वोचꣳ सुम्नेष्विद्वो अन्तमा मदेम ॥ ८ ॥ २५

२र १ २ १ १
* हाउ। ३। आइही। ३। आइही२। ३। आइ-
२ १ २१ १ २र२ ११
हिहा२इ। २। आइहिहाइ। विश्वे देवा मम शृण्वन्तुया
२ ३१र२ र र र २१ २ १र२
२३याम्। उभे रोदसी अपां नपाच्च मे२३न्मा। मा वो व
र र २१ २ २र १ २
चाꣳसि परिचक्ष्याणि वोर३चा३म्। हाउ। ३। आइही
१ १ २ १ ११
। ३। आइही२। ३। आइहिहा२इ। २। आइहिहाइ।
१र र र ३ २ २१११
सुम्नेष्विद्वो अन्तमा मदा२इमाउवा३। ई२३४५॥ ८ † ॥ २५

* "विश्वेषां देवानां व्रतम्"—इति ग्रा० गा० ४, २, ११।
† ग्रा० गा० २प० ४, १, ८।

एषा त्रिष्टुब् वैश्वदेवी भरद्वाजेन दृष्टा।

"विश्वे" सर्वे "देवाः" "मम" मदीयं "मन्म" मननीयं "यज्ञं" यजनीयं पूजां हवींषि वा "शृण्वन्तु" गृह्णन्त्वित्यर्थः। "अपान्नपात्" मध्यस्थानोऽग्निश्च* "उभे रोदसी" द्यावा-पृथिव्यौ अस्मदीयं स्तोत्रं शृण्वन्तु चित्ते अवधारयन्तु।

अथ प्रत्यक्ष-कृताः—हे "देवाः"! "वः" युष्माकं "परि-चक्ष्याणि" परिवर्जनीयानि यानि "वचांसि" स्तोत्राणि "मा

* "अपान्नपात् तनूनप्त्रा व्याख्यातः"—इत्यादि निरु० दै० ४,१८—१९। "तनून-पादाज्यं भवति नपादित्यनन्तरायाः प्रजाया नामधेयम्"—इत्यादि निरु० दै० २, ५॥ "आपः—इत्यन्तरिक्षनामसु अष्टमं नैघण्टुकम् १,३। "नपात्"—इति अपत्यनामसु त्रयोदशं नैघण्टुकम् २, २। अग्नेर्मध्यस्थानत्वं आततत्वादिकञ्च यथा—"अपा मुपस्थ उपस्थाने मध्यत्यन्तरिक्षलोक आसीना महान्त इति वा गृह्णत माध्यमिका देवगणा विश इव राजान मुपतस्थुर्ऋग्मिय मृग्मन्त मिति वार्चनीय मिति वा पूजनीय मिति वा अरणं दूतो देवानां विवस्वत आदित्याद्विवस्वान्विवासनवान् प्रेरितवतः परागता-द्वाग्निमेवास्मरस्य मातरिश्वान मावर्भार मात। मातरिश्वा वायुर्मातर्यन्तरिक्षे श्वसिति मातर्याश्वनितीति वाथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापादं स्तौति॥ मूर्धाभुवोभवतिनक्तमग्निस्ततःसूर्योजायतेप्रातरुद्यन्। मायामूतुयज्ञियानामेताम-पोयत्तूर्णिश्चरतिप्रजानन्। मूर्धा मूर्तं मस्मिन् धीयते मूर्धा यः सर्वेषां भूतानां भवति नक्त मग्निस्ततः सूर्यो जायते प्रातरुद्यंत्स एव। प्रज्ञां त्वेतां मन्यन्ते यज्ञि-यानां देवानां यज्ञसम्पादिनामपो यत् कर्म चरति प्रजानन् सर्वाणि स्थानान्यनु-सञ्चरति त्वरमाणस्तस्योत्तरा भूयसे निर्वचनाय॥ स्तोमेनहिदिविदेवासोअग्निमजी-जनञ्छक्तिभीरोदसिप्राम्। तमूअकृण्वन्त्रेधाभुवेकंसओषधीःपचतिविश्वरूपाः। स्तोमेन हि दिवि देवा अग्नि मजनयञ्छक्तिभिः कर्मभिर्द्यावापृथिव्यो रापूरणन्तमकुर्वं-स्त्रेधा भावाय पृथिव्या मन्तरिक्षे दिवीति शाकपूणिर्यदस्य दिवि तृतीयं तद-सावादित्यइति हि ब्राह्मणं तदृग्भ्योऽर्धकृत्य स्तौत्यथैनमेतयादित्यवत्स्तौति"—इति निरु० दै० १, २६—२८।

अथ दशमी ।

१ २ ३ १ २ ३ १र २र ३ २
यशोमाद्यावापृथिवीयशोमेन्द्रबृहस्पती ।
२ ३ १ २ ३ १ २ ३ १ २
यशोभगस्यविन्दतुयशोमाप्रतिमुच्यताम् ॥
३ २ २ ३ २ ३ १ २ ३ १ २
यशस्वा३ऽस्याः सꣳसदोहम्प्रवदितास्याम् ॥ १० ॥ २६

२ऽ १र २र १र र २ १र २ऽ
* हाउ३वा । यशोमाद्यावापृथिवी । हाउ३वा ।
१र २र २र २ऽ १र १
यशोमेन्द्रबृहस्पती । हाउ३वा । यशोभगस्यविन्दतु ।
२ऽ १र २र १ १ र २ऽ १
हाउ३वा । यशोमाप्रतिमुच्यताम् । हाउ३वा । यश
१ र २ १ २ऽ २ १ २ १र र
स्वियस्याःसꣳसदः । हाउ३वा । अहम्प्रवदितास्याम् ।
२ऽ १ २ १
हाउ३वा । अस्त्रमिष्टये३हस् ॥ १२ † ॥ २६

वोचं' न ब्रवीमि अपितु समीचीनानीति । अतः, "वः" युष्माकम् "अन्तमाः" अन्तिकतमाः सन्तो वयं "सुम्नेष्विव" युष्माभिर्दत्तेषु सुखेष्विव ‡ वर्तमानाः "मदेम" मोदेम ॥

"यज्ञम्"—"यज्ञियाः"—इति पाठौ ॥ ८ ॥ २५

---

* "यशः"—इति आ०ब्रा०३,७,७२ ।

† आ०गा०३प०४,२,१२ ।

‡ "सुम्नम्"—इति सुखनामसु पठितं नैघण्टुकम् ३, ६ ।

अथ एकादशी।

१ २ ३ २ ३क २र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
इन्द्रस्यनुवीर्य्याणिप्रवोचंयानिचकारप्रथमानिवज्री।

२ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अहन्नहिमन्वपस्ततर्द्द प्रवक्षणाअभिनत्पर्वतानाम्॥११॥२७*

वामदेवो महापङ्क्त्या स्तौति लिङ्गोक्तदेवता।

"द्यावापृथिवी" द्यावापृथिव्योः "यशः" "मा" स्तोतारम् "आविन्दतु" लभतां प्राप्नोत्वित्यर्थः। किञ्च, "इन्द्रबृहस्पती" इन्द्राबृहस्पत्योः † "यशः" "मा" मां विन्दतु। किञ्च, "भगस्य" आदित्यस्य ‡ "यशः, "मा" मां विन्दतु। बहुलेन यशसा यशोमया "मा प्रतिमुच्यताम्" न प्रमुच्यताम्। "यशस्वरस्याः" अस्याः मम "संसदः" समूहस्य "यशः" न प्रमुच्यताम्। "अहं" प्रवदिता सर्वत्र प्रवक्ता "स्याम्" भूयासम्॥ १० ॥ २६

---

* ऋ० ४,२,२६,१।

† "लिङ्गेन देवता इत्युक्तं पुरस्तात्तासां भक्ति-साहचर्यं व्याख्यास्यामः।...। "अथैतानीन्द्रभक्तीनि।...। अथास्य संस्तविका देवा अग्निः सोमो वरुणः पूषा बृहस्पतिः ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णुर्वायुः। अथापि मित्रो वरुणेन संस्तूयते पूष्णा रुद्रेण च सोमोऽग्निना च पूषा वातेन च पर्जन्यः"—इति निरु० दै० १,१०।

‡ "भगो व्याख्यातः तस्य कालः प्रागुत्सर्पणात्"—इत्यादि निरु० दै० ६,१३—१४। "आर त्वा भगम्। आर इव भग आदित्योऽप आर उच्यते"—इत्यादि निरु० नै० ७,१६।

* वृत्रहत्यायचोइ। ३। मधुष्मावेचोइ। ३। अपूरवे
चोइ। २। अपूरावा२इ। पृथिवीम्वाचोइ। विवर्त्तयाचो
इ। २। विवर्त्तीया२। अन्तरिक्ष(ं)चोइ। ३। सुधारया
चोइ। २। सुधाराया२। दिवंवेपाचोइ। ३। अवेपयी
चोइ। २। अवेपाया२ः। चोइ। २। ऊ२वे२। चा
३१उवा२। इन्द्र२। २। इन्द्र। स्यनू। २। स्यनू३। आ
उ। वा२। वीर्य्याणि। प्रवा।० २। प्रवा३१उ। वा२३।
चा२३४५म्। यानौ२। २। यानि। चका। २। चका३१
उ। वा२। रप्रथमा। निवा। २। निवा३१उ। वा२३।
औ२३४५। चव२न्। २। चवन्। च्.चाइम्। २।
अपा३१उ। वा२। अन्वपः। तता। २। तता३१उ। वा
२३। दा२३४५। प्रव२। २। प्रव। चणाः। २। चणा३१

* "वार्चम्"—इति चा० ग्रा० १, २, ११।

१ २ १ ११ २ १
उ। वा२। अभिनत्या। वंता। २। वंता३१उ। वा२३।
१ ११११ १ १२ १ १२
मा२३४५म्। वृत्रहत्यायहोइ। ३। अधप्आवे होइ। ३।
१२१२ १२१ २ १२२
अपूरवेहोइ। २। अपूरावा२इ। पृथिवीम्बाहोइ। ३।
१ १२ १ १ २१
विवर्त्तयाहोइ। २। विवर्त्ताया२। अन्तरिक्षहोइ। ३।
१२ १२ १२१ २ १२२
सुधारयाहोइ। २। सुधाराया२। दिवंवपाहोइ। ३।
१२१२ १२१ १ १६
अवेपयोहोइ। २। अवेपाया२:। होइ। २। ऊवे। २।
१ १२ २ १२ १ १२
वा३१उवा२। ए। वृत्रहाभपतलहा। ३॥ १७*॥ २७

इन्द्रो हिरण्यस्तूपेन त्रिष्टुबेषेन्द्रदेवता।

"वज्री" वज्रयुक्त इन्द्रः "प्रथमानि" पूर्वसिद्धानि मुख्यानि वा "यानि" "वीर्याणि" पराक्रमयुक्तानि "कर्माणि" चकार। तस्य "इन्द्रस्य" तानि वीर्याणि। "नु" क्षिप्रं "प्रवोचं" प्रब्रवीमि। कानि वीर्याणीति? तदुच्यते—"अहिं" मेघम् † "अहन्" हतवान्। तदेकं वीर्यम्। "अनु" पश्चाद् "अपः" जलानि

* ग्रा० गा० १प० ४, १, १०।

† "अहिः"—इति मेघनामसु पठितं निघण्टौ १, १०।

अथ द्वादशी।

२ ३१ ३ १२ ३ १२
अग्निरस्मिजन्मनाजातवेदा

३ १२ ३ १ २ ३ १ २ ३ २
घृतम्मेचक्षुरमृतम्मआसन्।

३ १ २३ १२ १२ ३ १२
त्रिधातुरर्कोरजसोविमानो

१२३ १ २३ १ २ ३ १ २
जस्रञ्ज्योतिर्हविरस्मिसर्वम्॥ १२ ॥ २८*

२ ३ १ २ ३ १ २३१ २ ३ १२ १ २
† हाउ३वा। अग्निरस्मिजन्मनाजातवे दाः। इडा।

२ १ २ २ ३ १ २ ३ १ २ ३ २ ३ २
सुवः। इडा। हाउ३वा। घृतम्मेचक्षुरमृतम्मआसन्।

१ २ २ १ २ २ ३ १ १२ ३ १२ १२
इडा। सुवः। इडा। हाउ३वा। त्रिधातुरर्कोरजसो

"ततर्द" हिंसितवान् भूमौ पातितवानित्यर्थः। इदं द्वितीयं वीर्यम्। "पर्वतानां" सम्बन्धिनीः "वक्षणाः" प्रवहणशीला नदीः† "प्राभिनत्" कूलद्वय-कर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यम्‡॥ ११ ॥ २७

---

* ऋ०३,२,११,१—२,१,१०,१—२,२,५,२।

† "यस्मै रिवाहन्यपातुमानस्—इति पा०व्रा०४,२,२४। पक्षेण द्वितीयपञ्चेतत्।

† "वक्षणाः"—इति नदीनामसु नवमं नैघण्टुकम् १, ११।

‡ "वध्यावस्य वमं त्वाङ्गमहान् इत्यवचो वा च का च यश्चजति रिष्ट-वर्णेन सम्"—इति निरु० दे० १, १०। इत्यवचो नेव-मम इति च नजाकम्।

१२ २ १ २ १ १ २ २१ १ २
विमानः। इडा। सुव.। इडा। हाउ३वा। अजस्र

१२ ११ ११२ १२ १ १२
ज्योतिर्हविरस्मिसर्व्वम्। इडा। सुवः। इडा॥ २ *॥ २८

विश्वामित्रऋषिस्त्रिष्टुप्छन्दस्त्वग्निरिति द्वयोः।

उत्तराग्नेः स्तुतिः पूर्वा स्तुतिः सर्वात्मनात्मनः।

हे कुशिकाः! भोक्तृ-भोग्य-भावेन द्विविधम् इदं सर्वं जगत्। "एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्न मग्नि रन्नादः"—इति श्रुतेः। तत्र सकल-भोक्तृ-वर्ग-रूपेणान्नादोऽग्निः। स च अग्निवाय्वादित्य-भेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्ष-द्युलोकानधितिष्ठति। तदुक्तं वाजसनेयके—"स त्रेधात्मानं व्यकुरुतादित्यं द्वितीयं वायुं तृतीयम्"—इति।

तत्र सः "अग्निः" अहं "जन्मना" एव "जातवेदाः" "अस्मि" श्रवण-मननादि-साधन-नैरपेक्ष्येण स्वभावत एव साक्षात्कृत-पर-तत्वस्वरूपोऽस्मि। "घृतं मे चक्षुः" यदेतद्विश्वस्यावभासकं मम स्वभावभूतम्प्रकाशात्मकं चक्षुः तद् घृतम् इदानीं मत्यन्तं दीप्तम्। यदेतद् "अमृतं" कर्म-फलं दिव्यादि विविध-विषयोपभोगात्मकं तत् "मे" मम "आसन्" आस्ये वर्तते। सकल-भोक्तृ-वर्गात्मना स्वयमेवावस्थानात् †। एवं स्वात्मनः पृथिव्यधिष्ठातृ-रूपता मभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृता माह—अर्को जगतः स्रष्टा

* आ० गा० ३प० ३, १, २।

प्राणः। "सोऽर्चन्नचरत्तस्यार्चत आपो आयन्तार्चतेव मेक मभू- दिति तदेवार्कस्यार्कत्वम्"—इति श्रुतेः। स प्राणः अहं "त्रिधा- तुः" त्रिधात्मानं विभज्य तत्र वायुात्मना "रजसः" अन्तरिक्षस्य "विमानः" विमाता अधिष्ठातास्मि॥ तथा आदित्यरूपेण द्युलो- काधिष्ठातृता माह—"अजस्रं ज्योतिः" अनुपक्षीणं नित्यं तेजः प्रकाशात्मा द्युलोकाधिष्ठाता आदित्योऽप्यहं मस्मि। एवं भोक्तृ-रूपता मात्मनोनुसन्धाय भोग्यरूपता मप्यनुसन्धत्ते। यत् "हविः" भोग्यं प्रसिद्ध मस्ति तत् "सर्वम्" अप्यहं मेवास्मि*।

यद्वा। अहम् "अग्नि रस्मि" देवानां हविः-प्रापणात् अङ्ग- नादिगुण-युक्तोऽस्मि। किञ्च, "जन्मना" उत्पत्त्या "जातवेदाः" जातज्ञानोऽस्मि। उत्पत्ति-क्षण एव सर्वज्ञोऽहं मस्मि। अथवा जातं सर्वं स्वात्मतया वेत्तीति जातवेदाः सर्वात्मक इत्यर्थः। तत् कथम्? इत्युच्यते—"घृतं मे चक्षुः" यदेतद् घृतं प्रसिद्धमस्ति तन्मे चक्षुः-स्थानीयम, यथा लोके चक्षुर्भासकम् एवं घृतमपि प्रक्षिप्तं ज्वालामुत्पादयत मम भासकम्। "अमृतं" प्रभारूपं यद- मृत मविनाशि ज्योतिः "मे" मम "आसन्" आस्ये वर्त्तते। "त्रिधातुः" प्राणापानव्यानात्मकस्त्रिधा वर्त्तमानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽप्यहं मेवास्मि। तथा "रजसः" अन्तरिक्षस्य "विमानः" विशेषेण माता परिच्छेत्ता वायुश्चाहं मस्मि। किञ्च। "अजस्रं ज्योतिः" नैरन्तर्येण तापकः सूर्यश्चाहं मस्मि। किं बहुना। आज्य-पुरोडाशादिरूपं यदेतद्धवि रस्ति तदुप- लक्षितं तत्सर्वं मप्यहं मस्मि। "सर्वं खल्विदं ब्रह्म"—इति

* अत्र षष्ठोक्तार्थानां तत्-पुरस्तादेवाहमस्मिप्रथमजाऋतस्येत्यत्र टीकितम्।

अथ त्रयोदशी ।

२ ३ १ ३ १र २र३ २र
पात्यग्निर्विपोअग्रम्पदंवेः
३र ३ १र २र ३ १ २
पातियह्वश्चरणᳪसूर्य्यस्य ।
२ ३ १ २ ३ १ २ ३ १र
पातिनाभासप्तशीर्षाणमग्निः
२र ३ १ २ ३ १ २ ३ २
पातिदेवानामुपमादमृष्वः ॥ १३ ॥ २९ *

॥ तृतीय-दशति ॥

२र २र र १ २र २
† हाउ । ३ । पात्यग्निर्विपोअग्रम्पदंवेः । हा३१उवा
२ ५ २ २ २
२३ । सू२३४वाः । इह । हा३१उवा२३ । ज्यो२३४
५ २र २र र १ २र २
तीः । हाउ । ३ । पातियह्वश्चरणᳪहरियास्या । हा३
३ ५ २ २ २
१उवा२३ । सू२३४वाः । इह । हा३१उवा२३ । ज्यो२

श्रुतेः । तमनेकधाम्नेः सर्वात्मकत्व-प्रतिपादनेन परमात्मत्व मुक्तं भवति ॥

"अजस्त्र"-"वर्मः"—इति सामऋचः पाठ-भेदः ॥ १२ ॥ २८

* ऋ० ३,१,९,१—३,१,२५,२—३,१,२१,१ ।

† इदमपि सर्वसामगेयं स्तोत्रम् ।

५ १र १र २ र २ र १ १ १
३४तीः। हाउ। २। पातिनाभासप्तशीर्षाणमाग्निः। हा
२ ५ २ १ १
३१उवा२३। सू२३४वाः। इड। हा३१उवा २३ ज्यो२३४
५ १र १र २ र २ र १ १ १
तीः। हाउ। ३। पातिदेवानामुपपादमाद्यः। हा३१
२ ५ २ १ १
उवा२३। सू२३४वाः। इड। हा३१उवा२३। ज्यो२३
५
४तीः॥ ३ *॥ २९

"अग्निः" "वेः" गन्त्याः † सर्वत्र व्याप्तायाः "विपः" रिपः भूम्याः ‡ "अग्र" मुख्यं "पदं" "स्थानं" "पाति" रक्षति। "यह्वः" महान्¶ अग्निः "सूर्यस्य" "चरणं" चरत्यनेनेति चरणमन्तरिक्षं§ "पाति"। "नाभा"‖ नाभौ अन्तरिक्षस्य मध्ये "सप्तशीर्षाणं" सप्तगणं मरुद्गणं "पाति"। "ऋष्वः" दर्शनीयोऽयम् +

* चा० आ० १प० ५, १, १।

† "वेः—इति वेतेर्गतिकर्मणो रूपम्, नै०२, १४, १८।

‡ "विपः"—इति रिप इत्यस्य रेफवकारव्यत्यये, पकारभावे रूपम्, "रिपः"—इति तु पृथिवी-नामसु पठितम् नैघण्टुकम् १, १।

¶ "यह्वः"—इति महन्नामसु पठितम् नैघण्टुकम् ३, ३।

§ "चरणमन्तरिक्षनामसु "अध्वा"—इति (नै० १, ३, ११)।

‖ सुपां सुलुगित्यादिना रूपम् (पा० ७, १, ३९)।

+ "ऋष्वः"—इति महन्नामसु पठितम् निरु० १,२०—१०,१६—१२,१०—१४,११।

अथ चतुर्थखण्डे—

सैषा प्रथमा।

१ २ २ १ ९ ३ ९ ३ १ १
आजन्यग्निसमिधानदीदिवोजिह्वाचरत्यन्तरासनि।

१र २र ३ १ २ १ २ ३ १र १र ३ १ २
सत्वन्नोअग्नेपयसावसुविद्रयिंवर्चोदृशेदाः ॥ १ ॥ ३०

२र र र१ २ १र र २
* आजाऔहोहोहाइ। त्यग्नेसमिधानादी१दिवा२ः।

२ र र१ २ १ १ २ र र
जिह्वाऔहोहोहाइ। चरत्यन्तारा१सानी२। सत्वाऔ

१ २ १र र र २ १ २१ १ २र २
होहोहाइ। नोअग्नेपयसावसू३वीत्। रयिंवर्चोदृशौहो

१ १ २ ४ ५ ४
३। इम्मा२। हा। औ३होवा। हो५इ। डा ॥ ५ † ॥ ३०

"अग्निः" "उपमादम्" "देवानाम्" उपमादकं यज्ञं "पाति" रक्षति ॥

"पात्यग्निर्विपोअग्रम्" — "पातिप्रियेरिपोअग्रम्" -- इति पाठौ ॥ १३ ॥ २९

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने षष्ठस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

* तत्रैव पञ्चम मिदम्।

† श्रा० गा० १ प० ५, १, ५।

अथ द्वितीया ।

१ १२ १२ १ १२ १२

वसन्तइन्नु रन्त्यो ग्रीष्मइन्नु रन्त्यः ।

१ १२ २२ १ १ २ १ १२ १२३ १२ १२

वर्षाण्यनु शरदो हेमन्तः शिशिरइन्नु रन्त्यः ॥ २ ॥ ३१

१ ४ २ ४ ५ १२ १

* वा५सन्ताः । ई३न्नू३रन्तायाः । ग्रीष्मइन्नुरा१

१ १ २१२ १ १ १ १ १२

नो३याः । वर्षाण्यनुशा३ । ऊम् । रा३दाः । हेमन्तः

१ १ २ १ ११

शिशिरइन्नुरा२न्तियाउ । वा३४५ ॥ ८ † ॥ ३१

वामदेव ऋषिः पङ्क्तिर्भ्राजन्नित्यग्न इति द्वयोः ।

आग्नेयी प्रथमर्त्तव्या द्वितीया दृश्यते तयोः ॥

"समिधान" ऋत्विग्भिः समिध्यमान ! दीप्त ! हे "अग्ने !" "भ्राजन्ती" प्रकाशमाना "आसनि" आस्ये "अन्तर्" मध्ये स्थिता त्वदीया "जिह्वाः" ‡ हवींषि "चरति" भक्षयति । हे "अग्ने" ! "वसुवित्" ! धनलम्भक ! त्वम् "अस्मभ्यम्" "पयसा" अन्नेन सह "रयिं" रमणीयं धनं "दृशे" दर्शनाय "वर्चः" तेजश्च तेजस्वित्वं वा "अदाः" देहि ॥ १ ॥ ३०

---

* "ऋतुथा"—इति आ० ग्रा० ३, २, २४ ।

† आ० ग्रा० १प० ४, १, ८ ।

‡ "जिह्वा"—इति वाङ्नामसु च दृश्यते १,११ । अग्नेश्च जिह्वाः सप्त काली-कराळीत्येवमादयः प्रसिद्धाः, सा एव पुनः कुमार इत्यप्युच्यते ।

"वसन्त इन्नु" वसन्तएव चैत्र-वैशाखरूपो वसन्तऋतुरेव "रन्त्यः" रमणीयः भवति। "ग्रीष्म इन्नु" ज्येष्ठाषाढरूपो ग्रीष्म-ऋतुरेव "रन्त्यः" रमणीयः। "वर्षाणि" वर्षा श्रावण-भाद्रपद-रूपेणावयवीभूतः प्रावृट् ऋतुरेव "रन्त्यः" रमणीयः। "तान्यनु" "शरदः" आश्विन-कार्त्तिकरूपेणावयवीभूत ऋतुः "रन्त्यः" रमणीयः। "हेमन्तः" मार्गशीर्ष-पौषरूप एव "रन्त्यः" रमणीयः। "शिशिर इन्नु" माघ फाल्गुनरूप एव "रन्त्यः" रमणीयः * ॥ २ ॥ ३१

* अत्रोपनिषत् तद्व्याख्यानञ्च यास्ककृतम्—"सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा। त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः। सप्त युञ्जन्ति रथमेकचक्रमेकचारिणम् चक्रं चक्रतेर्वा चरतेर्वा क्रामतेर्वा एको अश्वो वहति सप्तनामा-दित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वेद मपीतरन्नामै-तस्मा देवाभिसन्नामात्। संवत्सरप्रधान उत्तरोऽर्धर्चस्त्रिनाभिचक्रं त्र्यृतुः संवत्सरो ग्री-ष्मो वर्षा हेमन्त इति। संवत्सरः संवसन्तेऽस्मिन् भूतानि। ग्रीष्मो ग्रस्यन्ते अस्मिन् रसा वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान्। हिमं पुनर्हन्तेर्वा हिनोतेर्वा न अजर मजरणधर्माणं अनर्वमप्रत्यृतमन्यस्मिन्। यत्रेमानि सर्वाणि भूतान्यभि तिष्ठन्ति तं संवत्सरं सर्वमात्राभिः स्तौति। पञ्चारे चक्रे परिवर्त्तमाने इति पञ्चर्तुतया। पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मणं हेमन्त-शिशिरयोः समासेन षडर आहुरर्पितमिति षडृतुतया। अराः प्रत्यृता नाभौ। षट् पुनः सहतेः। द्वादशारं नहि तज्जराय। द्वादशप्रधयश्चक्रमेकमिति मासानां मासा मानात्। प्रधिः प्रहितो भवति। तस्मिन् साकन्त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन। सप्त शतानि विंशतिश्च तस्थुः। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन"—इति निरु० नै० ४, २७।

अथ तृतीया।

१ १ २　१　१ २　३ २ ३ १ २
सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।
१र २र ३१ १ २ ३ ० २　३ १
सभूमिꣳसर्वतो*वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ३ ॥ ३२ †

२ १　१　२ १ र र　२　२
‡ उऊवाहाउ। ३। सहस्रशीर्षाःपुरू२३षाः। सह-
२ १ २ १　२　१ र　२ १र　२　१
स्राक्षःसहस्रा२३पात्। सभूमिꣳसर्वतोवार२३त्वा। अत्यति
२१र　२　२ १　२　२ १　२
ष्ठद्दशाङ्गू२३लाम्। उऊवाहाउ। २। उऊवा३हाउ।
२　१　१ १ १ १
वा३। इट् इडा २३४५ ॥ १३०¶ ॥ ३२

सर्व-प्राणि-समष्टि-रूपो ब्रह्माण्ड-देहो विराडाख्यो यः पुरुषः सोऽयं "सहस्रशीर्षाः" सहस्र-शब्दस्योपलक्षणत्वात् ॥ अनन्तैः शिरोभिर्युक्त इत्यर्थः। यानि सर्व-प्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति, सहस्र-शीर्ष-त्वम्। एवं सहस्राक्षत्वं सहस्रपादत्वं च। स पुरुषो "भूमिं"

* "विश्वतो"—इति ऋ०।　　† ऋ० ८, ४, १७, १।
‡ "द्वे पुरुषव्रते"—इति आ० ब्रा० १,१,२५।
¶ आ० गा० ३य० ५, १, ११।
‖ "सहस्रम्"—इति बहुनामसु इदम नैघण्टुकम १, १।

अथ चतुर्थी।

१ २ ३ १ २ उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
त्रिपादूर्द्ध उदैत्पुरुषःपादोस्येहाभवत्पुनः।
२ ३ १ २ ३ क २ र ३ १ २ ३ १ २
तथा*विष्वङ्व्यक्रामदशना † नशनेअभि ॥ ४ ॥ ३३ ‡

२ १ २ र ३ १ २ र २ १
¶ उङ्कवौहोवा२। ३। त्रिपादूर्ध्वउदैत्पुरु२३षाः।
१२ र २ र २ १ २ १ र २ १ २
पादोस्येहाभवत्पू२३नाः। तथाविष्वङ्वियक्रा२३मात्।
२ र र २ १ १ र र २ १
अशनानशनेआ२३भौ। उङ्कवौहोवा२। २। उङ्क
र १ २ ५र र २ ५ २ १
वौ। होर। वा२३४। औहोवा। ई२३४डा। उङ्क
र र २ १ र १ २ ५र र
वौहोवा२। २। उङ्कवौ। होर। वा२३४। औहो

ब्रह्माण्ड-गोलक-रूपां सर्वतः "आ" समन्तात् "हत्वा" परिवेष्ट्य दशाङ्गुल-परिमितं देशम् "अत्यतिष्ठत्" अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थितइत्यर्थः॥ १॥ ३२

* "नमो"—इति क०। † "शानशना"—इति च क०।
‡ ऋ० ८, ४, १७, ४। ¶ तस्य द्वितीयम्।

अथ पञ्चमी ।

१२ १२७　　११११७ ११ १
पुरुषएवेद१*सवयद्भूतंय्यच्चभाव्यम् † ।

१　५　११ र ७र　　११ र
वा । च२३४वाः । उञ्ज्वौहोवा२ । २ । उञ्जवौ ।

१　१　५र र　　११११
घोर । वा२३४ । चौहोवा । ऊ२३४५ ॥ १४ ‡ ॥ ३२

योऽयं "त्रिपात् पुरुषः" संसार-स्पर्श-रहितः ब्रह्म-स्वरूपः सोऽयम् "ऊर्ध्व उदैत्" अस्मादज्ञान-कार्य्यात्संसाराद्बहिर्भूतः सन् तत्रत्यैर्गुणदोषै रस्पृष्टः उत्कर्षेण स्थितवान् । "अस्य" योयं "पादः" लेशः सोऽयमिह मायायां प्रादुरभवत् । सृष्टि-संहाराभ्यां पुनः पुनरागच्छदिति [ अस्य सर्वस्य जगतः परमात्म-लेशत्वं भगवताप्युक्तम्—"विष्टभ्याह मिदं कृत्स्न मेकांशेन स्थितो जगदिति" ] तथा मायाया मागत्यानन्तरं "विष्वङ्" देव-तिर्य्यगादि-रूपेण विविधः सन् "व्यक्रामत्" व्याप्तवान् । किं कृत्वा ? "अशनानशने" अभिलक्ष्य अशनं भोजनादि-व्यवहारोपेतं चेतनं प्राणि-जातम्, अनशनं तद्रहित मचेतनं गिरि-नद्यादिकम् । तदुभयथा यथा स्यात्तथा । यमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥ ४ ॥ ३२

---

* "पुरुषवेदं"—इति　} कर्मदीप-पाठौ ।
† "भवम्"—इति । }

‡ छां० आ० ३प० ५, १, १४ ।

१ २ १ १ २ ३ १ २ ३ १ २ ३ १ १ २ ३ १
पादोस्यसर्वाभूतानित्रिपादस्यामृतन्दिवि * ॥ ५ ॥ ३४ †

२ २ १ २ २ १
‡ इयौहोवा२। ३। पुरुषएवे द९सार२३र्वाम्।
१ २ २ १ २ २ २ २ २ २ २
यद्भूतंयच्चभावा२३याम्। पादोस्यसर्वाभुता२३नी। त्रि
१२ २ २ १ २ १ २ २ १ २ २
पादस्यामृतन्दा२३इवो। इयौहोवा२। २। इयौहो२
३ ५२ २ ३ ५ १ २ २
वा२३४। औहोवा। ई२३४डा। इयौहोवा२। २।
१ २ १ ३ ५ २ २ ३ ५ १ २
इयौहो२। वा२३४। औहोवा। ज्यो२३४ती:। इयौ
२ १ २ १ ३ ५ २ २
होवा२। २। इयौ। हो२। वा२३४औहोवा।
२ १ १ १ १
ई२३४५ ॥ १५ ¶ ॥ ३४

यत् "इदं" वर्त्तमानं जगत् तत् "सर्वं" "पुरुषएव"। "यद्भूतम्" उत्पन्नं जगत् "यच्च भाव्यं" भविष्यज्जगत् तदपि पुरुषएव यद्यस्मिन् काले वर्त्तमानाः प्राणिनः सर्वेऽपि चराचरात्मकपुरुष-

---

* "उतामृतत्व"—इत्यादिश्च कर्मदीपः।

† ऋ० ८, ४, १७, ४।

‡ "द्यौरिति लोकानां प्रतानि, दिवः"—इति छा० ब्रा० १, २, १५।

¶ छा० ब्रा० १प०४,१,१५।

अथ षष्ठी ।

१ २    ३ १उ ३ १ २ ३ १ २

तावानस्य*महिमाततो†ज्यायाꣳश्चपूरुषः ।

३ १ २ ३ १ १र ३ १र २र ३ १ २

उतामृतत्वस्येशानेयदन्नेनातिरोहति‡ ॥ ६ ॥ ३५¶

२र    १र २ १    १    २    १र

§ हाउ । ३ । तावानस्य । महा२३इमा३ । हाउ

स्यावयवाः तथैव गतागामिनो ऽपि कल्पयोद्रष्टव्य मित्यभिप्रायः। एतदेवोभयं स्पष्टीक्रियते—“अस्य” पुरुषस्य “सर्वाणि भूतानि” काल-त्रय-वर्त्तीनि प्राणि-जातानि “पादः” चतुर्थोऽंशः । “अस्य” पुरुषस्यावशिष्टं “त्रिपात्” स्वरूपम् “अमृतं” “विनाश-रहितं” सत् “दिवि” द्योतनात्मके स्व-प्रकाश-स्वरूपे व्यवतिष्ठत इति शेषः । [ यद्यपि “सत्यं ज्ञान मनन्त ब्रह्म”-इत्यनन्तस्य परब्रह्म-णोऽीयदन्तलाभावात् पादचतुष्टयं निरूपयितु मशक्यं, तथापि जगदिदं ब्रह्म-स्वरूपापेक्षया अल्पमिति विवक्षितत्वात् पादत्वा-पचारः ॥ ५ ॥ ३४

---

* “एतावानस्य”—इति,
† “अतो”—इति,
‡ “पादोऽस्येत्या”—इत्यादिश्च } ऋ० ।
¶ ऋ० ७, ४, १७, ३ ।
§ “अन्तरिक्षस्य”--इति, चा० ब्रा० १,१,२५ । अंसमिति शेषः ।

अत्रैवाश्वलायनेन स्व-ब्राह्मण मनुसरता कश्चिद्विशेषोऽनुष्टुब् गायत्री सम्पादनादिर्दर्शितः—

"प्रचेतनप्रचेतयायाहिपिबमत्स्व ।
क्रतुश्छन्दऋतम्बृहत्सुम्नआधेहिनोवसः ॥"—इति । *

"चिकित्वोऽभिनोनयशूरोयोगोषुगच्छति ।
सखासुशेवोअद्वयुः ॥"—इति । †

गायत्र्यादिरित्येव मादिः एष तु प्रयोग-सौकर्यार्थः । अस्माभिस्त्विदानीं मर्थ-सौकर्यार्थं क्रमेण सोपसर्गा ऋचो व्याख्याताः । ‡

---

* एषानुष्टुप् सम्पन्ना, अष्टाक्षर-चतुष्पदात्मस्य सम्पादनात् ।

† एषा गायत्री सम्पन्ना, अष्टाक्षर-त्रिपदात्मस्य सम्पादनात् ।

‡ ग्रन्थकारादयो हि ग्रथनीयं व्याख्येयं वा प्रथमं स्व-मनस्येव सम्पादयन्ते, ततश्च लेखन्यादिभिः बाध्यन्तेऽतोऽत्र 'व्याख्याताः'—इति भूतप्रयोगो नासाधुः; "कौमुदीयं विरच्यते"—इत्यादावप्येव मेव ।

॥ हरिः ओम् ॥

( प्रथमास्तिस्रः )

३ १ २   ३ २ ३ १र २र   ३ १ २
विदामघवन्विदागातुमनुशꣳसिषो दिशः ।
१ २   ३ १ २
शिक्षाशचीनाम्पतेपूर्वीणाम्पुरूवसो ॥ १ ॥
३ २उ ३ १ २ ३ २ २
आभिष्ट्वमभिष्टिभिःस्वाऽ३र्न्नाꣳशुः ।
१ २ ३ १ २ ३ १ ० ३ १ २ ३ २
प्रचेतनप्रचेतयेन्द्रद्युम्नायनइषे ॥ २ ॥
३ २उ ३ २ ३ १र २र
एवाहिशक्रोरायेवाजायवज्रिवः ।
१ २   ३ २ ३ १ २
शविष्ठवज्रिन्नृञ्जसेमꣳहिष्ठ
३ २३ १ २ ३ २३१२
वज्रिन्नृञ्जसआयाहिपिबमत्स्व ॥ ३ ॥ १
१   २१र २ १ १र१
* ए२ । विदामघवन्विदाः । गातुमनुशꣳसिषः ।
१ २   २ ५ १र १ र २र र
दाइआ३१उवा२३ । ई३४डा । ए२ । शिक्षाशचीनाम्प
१ २र१र१र १२   २ ५ १र
ताइ । पूर्वीणाम्पूरू२ । वसाइ३१उवा२३ । ई३४डा । आ

---

महानाम्नी साम ( आ० ग्रा० ३,२,२९ ) ।

भिष्ठमभा२इ। ष्टिभिरा३१उवा२३। ई३४डा। स्वर्णं प्रू२ः। च्चा३२उवा२३। ई३४डा। प्राचे। तनप्रचेतया। इन्द्रा। द्युम्नाभ्ना२इषाइ। इडा। इन्द्रा। द्युम्नाय ना२इषाइ। अथा। इन्द्रा। द्युम्नायना२इषाइ। इडा। एवाच्चिशक्रोरायेराजायवा१ज्री३वाः। शविष्ठ वज्रिन्ना३। जासाइ। मंच्चिष्ठवज्रिन्ना२३च्चो। जासा३२ उवा२३। इट्इडा२३४५। आया। च्चिपिबमा२ त्सुवा। इडा२३४५॥—

तत्र तावहस्तु, प्रथमं द्विपदा माह—"विदामघन्विदागा-तुमनुशंसिषोदिशः"—इति। हे "मघवन्" मघं धनं [ मंहते-र्दानकर्मणः * ] धनवन्निन्द्र! "विदाः" त्वं विद्धि, अत्र वेदितव्य-कर्म-विशेषस्यानुपादानात् सर्वं जानीहीत्यर्थः [ विदेः पञ्चम-

* 'मंहते' —इति दानकर्मसु पठितं नैघण्टुकम् ३, २०।

लकारे रूपम् * ] यतस्त्वं सर्वज्ञः तस्मात् "गातु" यजमान-गन्तव्यं देशं † "विदाः" जानीहि। यद्वा, गातुर्गायतेः स्तुतिकर्मणः ‡ त्वदर्थं क्रियमाणां स्तोतुः स्तुतिं विद्धि। ततो "दिशः" यजमानस्य साधुमार्गेण स्वर्गं गन्तुं मार्गान् "अनु शंसिषः" अनुशंसोऽपदिशं बोधयेति यावत् [ शंसतेः पञ्चम-लकारे ( पा० ३, ४, ७, ) रूपम्। अडागमः ¶ ]—अथ मुपसर्गभागः ॥

अथ शाक्वरभाग माह—"शिक्षाशचीनाम्पतेपूर्वीणाम्पुरू-वसो। आभिष्टमभिष्टिभिः"—इति। हे "शचीनाम्पते" शची-शब्देन कर्म प्रज्ञा वा § "पूर्वीणां" बह्वीनां ‖ शचीनां पते स्वामिन्! हे "पुरूवसो" पुरु प्रभूतं वसु धनं यस्य तस्य सम्बोधनं हे प्रभूतधनेन्द्र! "आभिः" इदानीं क्रियमाणाभिः "अभिष्टिभिः" अभ्येषणाभिः प्रार्थनाभिः स्तुतिभि रस्मदीयाभि

* लेटीत्यर्थः ( पा०३,४, ७ )।

† "गातुः"—इति पृथिवी-नामसु विंशं नैघण्टुकम् १,१। "गातुं यज्ञाय गातुं यज्ञपतय इत्यपि निगमो भवति। गमनं यज्ञाय गमनं यज्ञपतये"—इति निरु० नै० ४, २।

‡ "गायति"—इति स्तुति-कर्मसु द्वितीयं नैघण्टुकम् ३, १४।

¶ "लेटोऽडाटौ"—इति पा० ३, ४, ९४।

§ "शची"—इति कर्मनामसु द्वाचत्वारिंशत्तमं नैघण्टुकम् ( २,१), प्रज्ञानामसु नवमम् ( ३, ९ )।

‖ "पुरु"—इति बहुनामसु तृतीयं नैघण्टुकम् ३, १।

र्हेतुभिः "शिक्ष" * [ शिक्षतिर्दानकर्मा ( निघ० ३, २०, ८ ) ] देहि वसूनीति ] शेषः। पुरुवसो-इति सम्बोधन-सामर्थ्याद्वसूनीति लभ्यते॥

अथोपसर्गभाग माह—"स्वर्णांशुः। प्रचेतनप्रचेतये"—इति। स्वः, न, अंशुरिति पदत्रयम्। स्वरादित्यः, † नकार उपमार्थीयः ‡। स्वः, इव [ अंशुः अश्नोतिर्व्याप्तिकर्मणः ( निघ० २,१८,१० ) ] व्याप्तो भवतीन्द्रः। हे "प्रचेतन" प्रकृष्टा चेतना बुद्धिर्यस्यासौ तस्य सम्बोधनं हे प्रशस्तज्ञानेन्द्र! "प्रचेतय" अस्मदीयां भक्ति मवधारय जानीहि॥

अथोभयभाग माह—"द्युम्नायनइषएवाहिशक्रः"—इति। हे इन्द्र! "नः" अस्मभ्यं "द्युम्नाय" [ "द्युम्नं द्योततेर्यशोवान्नं वा" —इति यास्कः ( नै० ५,५ ) ] यशसे यद्वा, द्युम्नाय [ धननामैतत् ( निघ० २,१०,१३) धनलाभाय ] "इषे" अन्नलाभाय च भव [ आख्याताध्याहारः। हि शब्दः कारण-परः ] "हि" यस्मात् त्वं "शक्रः" धन-दाने समर्थ एव भवसि। तस्माद्धनादिकं प्रयच्छ॥

---

* मन्त्रे तु "शिक्षा"—इति दीर्घान्तः पाठः "द्व्यचोऽतस्तिङः (पा० ६, ३, १३५) —इति दीर्घः।

† स्वरादित्यो भवति"—इत्यादि निरु० नै० २, १४।

‡ "नेति प्रतिषेधार्थीयो भाषाया मुभय मन्वध्यायं नेन्द्रं देव ममंसतेति प्रतिषे-

( द्वितीया स्तिन्नः )

१ १ १२२ २ २ २३ १ १२ २११२ १२
विदाराये सुवीर्य्यं भवोवाजानाम्पतिर्वशाᳲ अनु ।
१ २ २२ ३१२ १२३ १२
मᳲहिष्ठवज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ ४ ॥

अथ शाक्वरभाग माह—"रायेवाजायवज्रिवः । शविष्ठवज्रिन्नृ-ञ्जसेमᳲहिष्ठवज्रिन्नृञ्जसे"—इति । हे "वज्रिवः" वज्रवन्निन्द्र ! एकोमत्वर्थीयोऽनुवादः । यद्वा, वज्रः व्रजनं गमनं तद्वान्वज्री । अथवा वज्रायुधं तद्वन्निन्द्र ! "राये" धनलाभाय "वाजाय" अन्नलाभाय च प्रसन्नो भवेति शेषः । हे "शविष्ठ" अतिशयेन बलवन् ! हे "वज्रिन्" इन्द्र ! "ऋञ्जसे" [ऋञ्जतिः प्रसाधन-कर्मा ( निघ० ३, ५, ८ )] अस्माभिर्धनलाभार्थं प्रसाध्यसे । यद्वा, [ऋञ्जतेः पञ्चमे लकारे (पा० ३, ४, ७) रूपम्] प्रसाधय अस्मान्धनादिभिः समृद्धान् कुर्वित्यर्थः । हे "मंहिष्ठ" [मंहतेर्दानकर्मणः] अतिशयेन दानशील पूज्य ! वा हे "वज्रिन्" "ऋञ्जसे" अस्माभिः प्रसाध्यसे ॥

अथापरभाग माह—"आयाहिपिबमत्स्व"—इति । यस्मादेवं तस्मात् "आयाहि" अस्मदीयं यज्ञं प्रत्यागच्छ । आगत्य च पिब । तं सोमं पीत्वा "मत्स्व" हृष्टो भवेति ॥ ( १-२-३ ) ॥

---

थार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति । दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते"—इति निरु० नै० १, ४ ।

१र २र ३ १ २ ३ २उ ३ २
योमꣳहिष्ठोमघोनामꣳशुर्न्न शोचिः।

१ २ ३ १ २ ३१ २ ३र २र
चिकित्वोअभिनोनयेन्द्रोविदेतुमुस्तुहि ॥ ५ ॥

१ ३ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
ईशे हिशक्रस्तमूतये हवामहे जे तारमपराजितम्।

१२ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ १
सनः स्वर्षदतिद्विषःक्रतुश्छन्दऋतम्बृहत्॥ ६ ॥ २

१ २ १र र र र १ १ र र र
ए२। विदारायेसुवीरियाम्। भुवोवाजानाम्पतिर्व

१ २ २ ५ १ १
शाꣳ२। अनुआ३१उवा२३। ई३४डा। ए२। मꣳहि

२ १ १ र ५२ २
ष्ठवज्रिन्नृञ्जमाइ। यःशविष्ठःशूरा२णा३१उवा२३। ई३४

५ १र र ५ २ २ ५
डा। योमꣳहिष्ठोमघोर। ना३१उवा२३। ई३४डा।

२ १ र ५ २ २ ५ १
अꣳशुर्नशोचा२इः। चा३१उवा२३। ई३४डा। चाइ।

१ र र १ २ २ १र १ १
कित्वोअभिनोनया। ईन्द्रो। विदेतम्रस्तुहाइ। इडा।

१ २ २१र १ १ १ २ २१र
ईन्द्रो। विदेतम्रस्तुहाइ। अथा। ईन्द्रो। विदेतम्

१ १ १र र र र ० २ २
रस्तुहाइ। इडा। ईशे हिशक्रस्तमूतये हवा१मा२हाइ।

२१२र  १  ४ ५  १  १
जेतारमपरा३। जाइताम्। सनःस्वर्षदता२३वोइ।

१ २  १ १११  १ २  २ १
हाइषा३१उवा२३। इट्इडा२३४५। क्रातूः। क्रन्द

१  १ १११
ऋतार२ब्बृहात्। इडा२३४५॥--

अथ द्वितीयाया ऋचि प्रथमं द्विपदा माह—"विदारायै सुवीर्य्यम्भुवोवाजानाम्पतिर्वशाꣳअन्विति। हे इन्द्र! "सुवीर्य्य" शोभनोवीरः पुत्रः शोभनपुंस्त्वोद्भव-सामर्थ्यम्। यद्वा, शोभनवीर्य्यं युद्धादिष्वपराजयं "विदाः" लम्भयं प्रापय। किमर्थम्? "रायै" धनार्थम् धनं रक्षितु मित्यर्थः। "वाजानां" सेनानां बलानां वा "पतिः" स्वामी त्वं "भुवः" भवसि। "वशान्" वशेः कर्म्मणिवशिरण्योरित्यप्रत्ययः। काम्यमानानर्थान् "अनु" अभि लक्ष्य यथाकाम मित्यर्थः। यद्वा वशांस्त्वदधीनान् यजमानान् "भुवः" भावयसि [भवतेः पञ्चमलकारे (पा० ३, ४, ७) रूपम्। "भूसुवोस्तिङि" (पा० ७,४,८८)—इति गुण-प्रतिषेधः॥

अथ तृतीयमाग माह—"मंहिष्ठवज्रिन्नृञ्जसेयःशविष्ठः शूराणाम्। योमंहिष्ठोमघोनाम्"—इति। हे "मंहिष्ठ" अतिशयेन बलवन्! "यः" त्व "मघोनां" मघशब्दो धनवाची तद्वतां मध्ये मंहिष्ठः अतिशयेन दाता तस्मादस्माभिर्धनार्थं प्रसाध्यसे॥

अथोपसर्गभाग माह—"अंशुर्नशोचिः। चिकित्वोअभिनोनया"-इति "अंशुर्न" व्याप्त आदित्य इव शोचिर्दीप्तो भवतीन्द्रः [ शुच दीप्तौ (भ्वा० आ०)] शुड़: [शुचेर्मत्वर्थीयलोपः] शोचिष्मान्। अथ प्रत्यक्षस्तुतिः—हे "चिकित्वः" चिकित्वन् [ मतुवसोरुसम्बुद्धौ छन्दसि (पा०८,३,१)"--इति रुत्वम्] ज्ञानवन्निन्द्र! "नः" अस्मान् अभि लक्ष्य "नय" धनादि प्रापय॥

अथ भागद्वयं मिलित्वाह—"इन्द्रोविदेतमुस्तुहि। ईशेहि शक्रः"—इति। "इन्द्रः" परमैश्वर्ययुक्तः। "विदे" विद्यते सर्वैर्ज्ञायते "तमु" तमेवेन्द्रं "स्तुहि" स्तुतिं कुर्विति। ऋषिरात्मानमेव शास्ति। "हि" यस्मात् "शक्रः" शत्रु-हनन-समर्थ इन्द्रः "ईशे" ईष्टे सर्वस्येति तस्मात् तमेव स्तुहीति समन्वयः॥

अथ शाक्करभाग माह—"तमूतयेहवामहेजेतारमपराजितम्। सनःस्वर्षदतिद्विषः"—इति। "तम् इन्द्रम्" "ऊतये" अस्मद्रक्षणार्थं "हवामहे" आह्वयामहे। कीदृशम्? "जेतारं" युद्धेषु शत्रुजयशीलं [ ताच्छील्ये तृन् प्रत्ययः (पा०३,२,१३५)]। अतएव अपराजितं न क्वाप्यन्यैः पराजितम्। "सः" इन्द्रः "नः" अस्माकं "द्विषः" द्वेष्टॄन् "अति स्वर्षत्" अत्यर्थ मुपतपतु विनाशयतु। स्वृ शब्दोपतापयोरित्यस्मात् पञ्चम-लकारेरूपम्। अथ वा

---

• "इन्द्रतेवर्ष-कर्मणः"—इति निरु० दै० ४, ८।

( तृतीया खण्डः )

२ ३ १ १　२ ११　१ १ २ ३ १ १
इन्द्रन्धनस्यसातये हवामहे जेतारमपराजितम् ।
१ २　३ २ ३ २ ३ १ २　३ २ ३ १ २
सनःस्वर्षदतिद्विषःसनःस्वर्षदतिद्विषः ॥ ७ ॥
१ २ ३ १ २　३　१र २र
पूर्वस्यय‌त्तेअद्रिवोंऽशुर्म्मदाय ।
३ १र　२र　३ १ २
सुम्न आधेहिनोवसोपूर्त्तिःशविष्ठशस्यते ॥
३ १उ　३ २ ३ १र　२र ३ १ २
वशोहिशक्रोनूनन्तन्नव्यंऽसन्यसे ॥ ८ ॥

स्वरतिर्गतिकर्मा ( निघ० २,१४,५४ ) अस्मत्तः शत्रूनतिगमयतु अतिपारयतु । तथा च बह्वृचाः—"सनःपर्षदित्यामनन्ति ॥

अथोपसर्गभाग माह—"क्रतुश्छन्दऋतम्बृहत्"—इति । शत्रुहननानन्तरं "क्रतुः" अस्माभिरनुष्ठीयमानं कर्म * । "छन्दः" † गायत्र्यादिकं शस्त्रलक्षणम् । "ऋतम्" उदकं ‡ सोमरस इत्यर्थः । यद्वा ऋतं सत्यभूतं ¶ कर्मफलं तत्सर्वं "बृहत्" प्रभूत मस्त्विति शेषः ॥ ( ४-५-६ ) ॥

---

* "क्रतुः"—इति कर्मनामसु एकादशं नैघण्टुकम् २, १ ।

† "छन्दांसि छन्दनात्"—इति निरु० दै० १, १२ ।

‡ "ऋतम्"—इति उदकनामसु चतुश्चत्वारिंशत्तमं नैघण्टुकम् १, १२ ।

¶ "ऋतम्"—इति सत्यनामसु षष्ठं नैघण्टुकम् ३, १० ।

३ १र २र १ २ १ २
प्रभोजनस्यवृत्रहन्त्समर्य्येषुब्रवावहै ।

२ ३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २
शूरोयोगोषुगच्छतिसखासुशेवोअद्वयुः ॥ ९ ॥ ३

१ १ २ र १ १ र र र र
ए२ । इन्द्रन्धनस्यसातयाइ । हवामहेजेतारमप

१ २ २ ५ १ १ २
रा२ । जितमा३१उवा२३ । ई३४डा । ए२ । सनःस्वर्ष

१ १ १ २
दतिद्विषाः । सानःस्वर्षदता२इ । द्विषआ३१उवा२३ ।

२ ५ १र १ २ २
ई३४डा । पर्वस्ययन्तआ२ । द्रिवआ३१उवा२३ । ई३४

५ २ १ र ऽ २ २ ५
डा । अ९ शुर्मदाया२ । हा३१उवा२३ । ई३४डा ।

१ १ २ र र १ २ २ १ १
सूमनआधेहिनोवसाउ । पूर्त्तीः । शविष्ठशा२स्यताइ ।

१ १ २ २ १ १ १ १ २
इडा । पूर्त्तीः । शविष्ठशा२स्यताइ । अया । पूर्त्तीः ।

२ १ १ १ १ २ र र २
शविष्ठशा२स्यताइ । इडा । वशोहिशक्रोनूनन्तन्नव्य९सा

२ २ २ १र २ ४ ५ १ र
१न्या३साइ । प्रभोजनस्यवा३ । त्राहान् । समर्येषुब्रवा

१ १ २ १ १ १ १ १ १ २
२३वोइ । वाहा३१उवा२३ । इटइडा२३४५ । शूरो ।

२र १र १ १ १ २ २ १र १
योगोषुगा२च्छताइ। इडा। साखा। सुम्नेवो२हयू:।
१ १ १ १ १
इडा२३४५॥—

अथ तृतीयस्या ऋचि प्रथमं द्विपदा माह—"इन्द्रन्धनस्यसातयेहवामहेजेतारमपराजिम्"—इति। "धनस्य" "सातये" लाभार्थम्। शेषं स्पष्टम्॥

अथ याज्ञरभाग माह—"सनःस्वर्षदतिद्विषः। पूर्वस्ययत्ते अद्रिवः"—इति। "सः" इन्द्रो "नः" अस्माकं "द्विषः" द्वेष्टॄन् "अति स्वर्षत्" विनाशयतु। येऽप्यन्ये स्वयं द्वेषं न कुर्वन्ति तथापि "द्विषः" अस्माभिर्द्वेष्याः तानप्यति स्वर्षत् [ सर्वत्र हि वेदेषु योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्यादौ द्वेष्टॄणां द्वेष्याणाञ्च विनाशः प्रार्थ्यते ]। हे "अद्रिवः" अद्रयः पर्वताः तद्वन्निन्द्र! इन्द्रो यतः पर्वतान् भिनत्ति अतः पर्वतेन्द्रयोर्भेद्यभेदकसम्बन्धः *। यद्वा आदृणात्यसुररक्षांसीति वा अन्यैः स्वयं न दीर्यते प्रहृत इति वा अद्रिर्वज्रः तद्वन्निन्द्र! "पूर्वस्य" पुरातनस्य "ते" तव "यद्" धन मस्ति तदस्मभ्य माहरेति शेषः॥

अथापरभागमाह—"अंशुर्मदायसून्नआधेहिनोवसः"—इति। हे इन्द्र! योऽयम् "अंशुः" सोमलताखण्डः तज्जन्यः सोमरस इत्यर्थः [ जन्ये जनकव्यवहारः ] स च "मदाय" भवति।

---

* "नवोपमार्थेन युद्धवर्णा भवन्ति"—इति निरु० नै० २, १६।

यस्मादस्माभिर्दत्तः सोमः तव मदाय भवति तस्मात् हे "वसो" निवासहेतो इन्द्र! "नः" अस्मान् "सुम्ने" सुखे धने वा* "आधेहि" स्थापय॥

अथ स्तोत्रपरभागो सहैवाह—"पूर्तिःशविष्ठशस्यतेवशीहिशक्रः"—इति। हे "शविष्ठ" बलवत्तमेन्द्र! तव "पूर्तिः" त्वदीयं धनपूरणं दान मित्यर्थः। "शस्यते" सर्वैः स्तूयते। "हि" यस्मात् "शक्रः" समर्थ इन्द्रः "वशी" सर्वस्य नियन्ता खलु। यद्वा, "वशी" वसुविषय-स्वीकारवान्। अतएव "शक्रः" दाने शक्तिमान्। तस्मात्ते दानं स्तूयते॥

अथ शाक्करभाग माह—"नूनन्तन्नव्यं सन्यसे। प्रभोजनस्य वृत्रहन्त्समर्येषुब्रवावहै"—इति। हे "प्रभो" सर्वस्य जनस्य स्वामिन्! हे "वृत्रहन्" वृत्रो मारकः शत्रुः तद्धननवान् शत्रुघातिन्†। "नव्यम्" नूतनं‡ बली-पलितादि-लक्षणेन पुराणत्वेन वर्जितं तमिन्द्रं त्वां "नूनम्" अवश्यं "सन्यसे" अहं सम्यक् नितरां प्रक्षिपामि। अस्मिन् कर्मणि हविषो भोक्तृत्वेन स्थापयामीत्यर्थः [असु क्षेपणे (दि०प०)। व्यत्ययेनात्मने पदम् (पा०३,१,-८५) विकरण-लुक् च। सह सुपेत्यत्र सहेति योगविभागात् सन्नि-

---

* "सुम्नम्"—इति सुखनामसु षोडशं नैघण्टुकम् ३, ६।

† "वृत्रो मेघ इति नैरुक्ताः त्वाष्ट्रोऽसुर इत्यैतिहासिकाः"—इति निरु०नै० २,१६।

‡ "नव्यम्"—इति नूतननामसु चतुर्थं नैघण्टुकम् ३, १८।

भ्या मुपसर्गाभ्यां सह समासः । यद्वा, हे इन्द्र ! नव्यमिति क्रिया-विशेषणम् नूतनम् अन्यै रकृत-पूर्वं यथा भवति तथा "नूनम्"-इदानीं "सन्यसे" अस्माभिः सेव्यसे। षण सम्भक्तौ (स्वा०प०)। तकि रूपम्। "छन्दस्यनेक मपि साकाङ्क्षम् (पा० ८, १, ३५)—इत्याख्यातस्योदात्तत्वम्। किञ्च। "अर्येषु" अर्थेषु प्राप्तव्येषु यज्ञादिषु कर्मसु "सम्प्रवाव्है" त्वञ्चाहञ्चावां सम्भाषां करवावहै। सर्वस्य यजमानस्येन्द्रसाक्षात्कारो भवति तमर्थं द्योतयितु मेवाव सहवदन मित्यर्थः॥

अथोपसर्गभाग माह—"शूरोयोगोषुगच्छतिसखासुशेवोअद्वयुः"—इति। य इन्द्रः "शूरः" समर्थः [ गोषु निमित्त-सप्तमी (पा० २,३,३७) ] "गोषु" गवार्थं युद्धादिषु शत्रुभ्यो गवान-यनार्थं गच्छतीत्यर्थः। कीदृशः ? "सखा" समानख्यानः सखि-वदत्यन्तस्निग्धः। अतएव "सुशेवः" शोभन-सुखः भक्तेभ्यो ण सुखकरः। "अद्वयुः" द्वयरहितः सत्यानृतवर्जितः केवल-सत्य-स्वरूप इत्यर्थः। यद्वा। यदहं मनसि वचसि क्रियायां वान्यत् कार्यं मिति तद्रहितः। अथवा एतत्सदृशो द्वितीयो नास्तीत्य-द्वयुः [मत्वर्थीय उप्रत्ययः] अपिच। एताभ्यां यजमानेन्द्रयोः सम्भाषा-प्रकारोऽभिधीयते। हे इन्द्र ! "यः" यजमानोऽस्ति सोऽयं गोषु दक्षिणारूपेण दातव्यासु उदारः सन् प्रवर्तते, सर्वा अपि ददातीति। यद्वा, गोषु आग्रयण-क्षीरानयनार्थं गच्छ-

( पञ्च पुरीषपदानि )

३ २ ऽऽऽऽऽ ऽ२३१ २ ३१२
एवाह्यो ऽ३ऽ३ऽ३वएवा ह्यग्नेएवाहीन्द्र।
३१र २र ३१र २र
एवाहिपूषन्एवाहिदेवाः ॥ १० ॥ ४

१ २ २ र११११ १ १ २र
आइवा। हियेवा२३४५। होइ। हो। वाहा३१
२ ५ १ २ २ १ ११११ १
उवा२३। ई३४डा। आइवा। हियग्ना२३४५इ। हो
१ २र २ ५ १ २ २
इ। हो। वाहा३१उवा२३। ई३४डा। आइवा। हि
१ ११११ १ १ २ २ ५
इन्द्रा२३४५। होइ। हो। वाहा३१उवा२३ इ३४डा।
१ २ २१ ऽऽऽऽ १ १ २र
आइवा। हिपूषा२३४५न्। होइ। हो। वाहा३१
२ ५ १ २ २र१ ११११
उवा२३। ई ३ ४ डा। आइवा। हिदेवा २ ३ ४ ५ः।
१ १ २र २ ५
होइ। हो। वाहा ३ १ उवा २ ३। ई ३ ४ डा ॥ १ ॥

तीत्येवं मदीयं गुणं त्वं देवेषु ब्रूहि। अहमिन्द्रोऽयं स्तोत्रेषु सखा सन् सुखकरो भवतीत्येवं त्वदीयं गुण मन्येषु स्तोत्रेषु ब्रवीमीति। एव मृचो व्याख्याताः॥ ( ७ ८-९ )॥

अथ पुरीषपदानि व्याख्यायन्ते—तानि सर्वाण्यैन्द्राण्येव तद्गुण-योगात्तत्त्वतृतीयपदेन वाय्वादिपदैरिन्द्र एव * सम्बोध्य स्तूयते ॥

तत्र प्रथमं पद माह—एवाह्येवेति। हे "इन्द्र!" त्वम् "एव † हि" एव मुक्तगुणोऽसि खलु। यद्वा, एव शब्द इण्-गतौ (अदा०प०)—इत्यस्मात् "इणशीभ्यावन्नीति वन्प्रत्ययान्तः। सुपो लुक् (पा०७,१,३९)। अस्मदीयं यज्ञं प्रत्येव आगन्ता भवेति शेषः। एवेति पुनरुक्तिरादरार्था ॥

अथ द्वितीयं पद माह—एवाह्यग्न इति। हे "अग्ने" अग्रस्य नेतः देवानां पुरतो गन्तरिन्द्र! एतदात्मक वा इन्द्र! ‡ "एव हि" एवं गुणयुक्तः खलु यज्ञं प्रत्यागन्ता त्वं भव ॥

अथ तृतीयं पद माह—एवाहीन्द्रेति। हे "इन्द्र" परमैश्वर्ययुक्त! यद्वा, इन्धे प्रकाशयति तेजसा भूतानीतीन्द्रः। अथवा इदं सर्वं जगत् प्रथम मपश्यदितीन्द्रः। तथाच ऐतरेयोपनिषदि श्रूयते—"इद मदर्श मिति। तस्मादिन्द्रो

* "एकरूपा मित्यग्निः पृथिवीं दहति सर्वमर्कोऽभि विपश्यति कर्मभिरादित्योऽतिरेकस्य दृश्यते"—इति निरु० दै० ५, २७।

† मन्त्रे तु "एवा"—इति "निपातस्य च ( ६, ३, १३६ )"—इति दीर्घः।

‡ "इम मेवाग्निं महान्त मात्मान मेक मात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुण मग्निं दिव्यञ्च गरुत्मन्तम्"—इति निरु० दै० १, १८।

नामेन्द्रो ह वै नाम तमिन्द्रं सन्त मिन्द्र इत्याचक्षते परोक्षेणेति। तादृशम् "एव हि"॥

अथ चतुर्थं पद माह—एवाहिपूषन्निति। "पूषन्" विश्वस्य पोषक एतदात्मक वा इन्द्र! * एव मुक्तगुणः खलु त्वम्॥

अथ पञ्चमं पद माह—एवाहिदेवाइति। हे "देवाः" इन्द्रादयः! यद्वा सर्वदेवानां बलरूपेण इन्द्रस्यावस्थानात् † इन्द्र एव बहुत्वेन सम्बोध्यते। हे "इन्द्र"! एव मुक्तगुणः खलु त्वम्। यद्वा, एवशब्दात् सुपांसुलुगिति (पा० ७,१,३९) जसो लुक्। अस्मदीयं यज्ञं आगन्तारो भवतेत्यर्थः॥ (१०)॥ १

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥ १॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने महानाम्नी-व्याख्यानं समाप्तम्॥

---

॥ सामवेदसंहितायां महानाम्न्यार्चिकः समाप्तः॥

---

* "अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति"—इत्यादि निरु० दै० ६, १६।

† "या च का च बलकृतिरिन्द्रकर्मैव तत्"—इति निरु० दै० १, १०।

२ ५ २र २ ५ १
२३। सीर२३४यूः। हाहा३१उवा२३। ई२३४डा। न

२ २ १ र २ २ ५ २र
त्वावज्रिं सहस्र ँ सू। रिया३ १उवा२३। आ२३४नू। हा

२ ५ १ र २
हा३१उवा२३। ई२३४डा। नजातमाष्टरो३। आउ।

१ २ ५ २र १ १११
वा२३। दा२३४सी। हाहा३१उवा२३। इट्इडा२३४५॥१॥

१ र १ १ १ १र २ १ र र २ १ ऽ ऽ
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्त्रोवा।

१ र १ २ १ र १ १
नात्वावज्रिन्। सहस्र ँ सूरिया २आनू २। नाजा २त

१ १ १ १ २ ५र र १
मा। ष्टरो२३। दा२सा२३४औहोवा। दिमं विश्र ँ ह

१ र २ १ १ ११११
स्। अस्वामिशूमतो३। इट्। इडा२३४५॥२॥

१ र २ र १ १र २ १ र र ११ ऽ
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्त्रोवा।

१र १ १र ऽ २ १ र २
औवा२। ''व ँ २। ३। ओवा३। हाउवा। नत्वावज्रिं

° "सहसा च"—इति पा० ग्रा० ३, २, ८। वैरूपमिति शेषः।

† "पञ्चनिधनम्"—इति पा० ग्रा० ३,२,८। वैरूपमिति शेषः।

१ २ १र २र १ २ १र १ १र ५ १
सहस्रꣳसूर्य्याअनु। ओवा२। हुꣳ२। ३। ओवा३। हा
१र
उवा। नजातमष्टरोदसी। ओवा२। हुꣳ२। ३। ओ
५ २ १ १र १
वा३। हाउवा। दिशंविशꣳहस्। ओवा२। हुꣳ
१र ५ २ १ र २ र १र
२। ३। ओवा३। हाउवा। अस्माशिप्रुमती। ओवा
१ १र ५ २ १ १ १ १
२। हुꣳ२। ३। ओवा३। हाउवा३। इट्इडा२३४५॥३॥

१ र २ र १ १र २ १ र र १ १ ५ ५
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। ओवा।
२५ ५ ५ १ र २ १ २ १र २र १ २५
हाउहाउहाउवा। नत्वावज्रिन्त्सहस्रꣳसूर्य्याअनु। हा
१ र २ १र १र २५
उ३वा। नजातमष्टरोदसी। हाउ३वा। दिशंविशꣳ
२५ १ र २ र २५ १
हस्। हाउ३वा। अस्माशिप्रुमती। हाउ३वा। यु
१ २ र १ र २५ १ १ १ १ १
वतिस्वकुमारिणी। हाउ३वा३। इट्इडा२३४५॥४॥

१ र २ र १ १र २ १ र र १ १ ५
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। ओवा।

---

* "पवित्रसख"—इति आ० ग्रा० १,२,८। वैरूपमिति शेषः।
† "यज्ञसिंचसख"—इति आ० ग्रा० १,२,८। वैरूपमिति शेषः।

२ऽ १ २ २ १ २ १२ १२ १ २ऽ
हाउ३वा। नत्वावज्रिन्त्सहस्रꣳसूर्य्याअनु। हाउ३वा।
१ २ २१२ १२ २ऽ १ २ऽ
नजातमष्टरोदसी। हाउ३वा। दिग्मंविग्रꣳहस्। हा
१ २ १ २ २ऽ १२ २ऽ
उ३वा। अस्माभिष्ट्युमती। हाउ३वा। सूवः। हाउ
१२ २ऽ १ १ १ १ १
३वा। ज्योतिः। हाउ३वा३। इट्इडा२३४५॥ ५॥

१ २ २ २ १ १२ २ १ २ २ २ १ १ऽ
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। ह्रोवा।
२ऽ १ २ २ १ २ १२ १२ १ २ऽ १
हाउ३वा। नत्वावज्रिन्त्सहस्रꣳसूर्य्याअनु। हाउ३वा। न
२ २१२ १२ २ऽ १ २ऽ
जातमष्टरोदसी। हाउ३वा। दिग्मंविग्रꣳहस्। हाउ३
१ २ १ २ २ऽ २ १ १ २ १ २
वा। अस्माभिष्ट्युमती। हाउ३वा। युवतिस्वकुमारिणी।
२ऽ १२ २ऽ १२ २ऽ
हाउ३वा। सूवः। हाउ३वा। ज्योतिः। हाउ३वा३।
१ १ १ १ १
इट्इडा२३४५॥ ६॥

१ २ २ २ १ १२ २ १ २ २ २ १ ऽ
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। ह्रोवा।

---

* "षडानिधनम्"—इति पा० ग्रा० ३,२,८। वैरूपमिति शेषः।

† "द्वादशनिधनम्"—इति पा० ग्रा० ३,२,८। वैरूपमिति शेषः।

१ २ र १ २ १ र १ १ १
ओहवाउवाउ। ओहवाउवा। नत्वावज्रिन्त्सहस्र

१र २र.१ २र २र १र २र २र २र १र २र २र २र १र २र
सूर्यामनु। ओवाओवा। ओवाओवा। ओवाओवा

२ १ र २ १र २र १ २ र
३। हाउवा। नजातमष्टरोदसी। ओहवाउवाउ।

१ २ १ २र २र १र २र
ओहवाउवा। दिशंविश्वसस्। ओवाओवा। २।

२र २र १र २र २ १ र १ र १ २
ओवाओवा ३। हाउवा। अस्माभिष्टुमती। ओह

र १ २ १र र २र २र १र २र
वाउवाउ। ओहवाउवा। सूवाः। ओवाओवा। २।

२र २र १र २र २ १र १ २ र
ओवाओवा३। हाउवा। ज्योतिः। ओहवाउवाउ।

१ २ १र र २र २र १र २र २र २र १र २र
ओहवाउवा। इडा। ओवाओवा। २। ओवाओवा

२ १ १र १ २ र १ २
३। हाउवा। इट्। इडा। ओहवाउवाउ। ओहवाउ

२ २ २ ११११११
वा३। चौ३। आ३। ऊं३। इ२३४५॥ ७॥

१र २ र १ १र २ १ र र २
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

* "पुष्पवच"—इति आ० ब्रा० १,२,८ वैकल्पिमिति शेषः।

१र १र र १ र १र १र १ १ र १ २ ५
हाओवा।२।ऊवे।हाओवा। ऊवे। हाओ२३४वा।
१ र र १ २ १र १र १ १र १र र १ र १र
नत्वावज्रिन्त्सहस्रꣳसूर्य्याअनु। हाओवा।३।ऊवे।हा
१र र १ र १ २ ५ १ र २ १र १र
ओवा।२। ऊवे। हाओ२३४वा। नजातमष्टरोदसी।
१र १र र १ र १र १र र १ र १ १र १ १
हाओवा।४। ऊवे।हाओवा।४। नाजातमष्टरोदसा
१र १ २ ५ १र १र र १ र १र १र
इ।ऐहोइ। आ२३४इही।हाओवा।५।ऊवे।हाओ
र १ऽऽऽ १ ऽ २ऽ २ १ १ १ १
वा।५।हैहैहैहोवा३।हाउवा३।ऊ२३४५॥८॥

एतेषां व्याख्यानम्—१भा० ५७१ पृष्ठे द्रष्टव्यम्।१—८

१र र १ १ ऽ १र र १र
* हाउपिबासुता। स्यरसि। नाः। औहोहोवा२।
१ २ १ र २ १र १र र १र १ २
इहा। मत्स्वानइन्द्रगोम। ताः। औहोहोवा२। इहा।
१र १ र १र १र १र १ १र र १र १ २
आपिर्नोबोधिसधमाद्येवृ। धाइ। औहोहोवा२। इहा।
१र १ १र र १र १ २ २ १ १
धस्माꣳअ। वा। औहोहोवा२। इहा। तुनाइ। धा

* "धन्तरिक्षे हु"—इति था० आ० ३,१,८। तत्र पर्व्वमिदम्।

२या२३४औहोवा । सृष्टुभस्तुभोम्याधिप्युमक्रा३न् । इट्
इडा२३४५ ॥ ९ ॥

* पिबासुना । स्वरसिनः । मान्सा१नाई२ । आ । औ३
होवाहाउवा३ । ई३४डा । द्रगोमतः । आपिनोबो२ ।
आ । औ३होवाहाउवा३ । ई३४डा । धिसन्धमाद्येवृधे ।
आस्मा०९१अवा२ । आ । औ३होवाहाउवा३ । ई३४डा ।
तुनाइ । धा२२या२३४औहोवा । विष्टुभस्तुभोम्याधिप्युम-
क्रा३न् । इट्इटा२३४५ ॥ १० ॥

अनयोर्व्याख्यानम्—१भा० ४९६ पृष्ठे द्रष्टव्यम् । ९,१०

† हाच । होइया । ३ । पावी । अन्ताइ । वितता३
अ । ह्मणस्पा२३३ताइ । प्राभूः । गात्रा । णी३परि

* "अभ्रित्रि ते"—इति आ० आ० ३,२,८ । तत्रोत्तरमिदम् ।
† "अरित्र ते"—इति आ० आ० ३, १, ८ । तत्र पूर्वमिदम् ।

१ १२ २ ५ ४ ५ १ २ १
याइ। पिवाइस्वा२३४ताः। आता। प्रता। नूरनं

२ १र १र २ २ ५ ४ ५ १ १ २
तटा। मोश्रमू२३४ताइ। शार्त्ता। सआइत्। वदन्तः।

१ २र ३ ५ २र २र ३ र ३र ४५ ५र
सन्तदाग्रा२३३ता। हाउ। होइया। ३। होइडा।

३ ५
२। होर३४५इ। डा॥११॥

३र २ १ १ १ ४ ५ १ १ २
* हाउ। हौ३४५। ३। पावी। त्वन्ताइ। वितता

१ २ ३ ५ ४ ५ १र २ १ १ १
इम्ब्रह्मणस्पा२३४ताइ। प्राभूः। गात्रा। णी३परियाइ।

२ ३ ५ ४ ५ १ २ १ २ १र १र २ ३
पिवाइस्वा२३४ताः। आता। प्रता। नूरनंतटा। मोश्रमू

५ ४ ५ १ १ २ १ २र ३
२३४ताइ। शार्त्ता। सआइत्। वदन्तः। सन्तदाग्रा२३४

५ ३र २ १ १ १ ३र ४५ ५र ३
ता। हाउ। हौ३४५। ३। होइडा। होर३४५इ।

५
डा॥१२॥ ~

अनयोर्व्याख्यानम्—२भा० १०० पृष्ठे द्रष्टव्यम्। ११,१२

* "परिहे हे"—इति आ० ग्रा० ३, २, ८। तयोगरमिदम्।

१ २ २र १र २र १ १ २ २
* हावाभी। त्वापूर्व्वपीत। ,याइ। इहा३। हाउ
२ ५ २ १ १र १ २३र२१ १ १
वा३। बृ२३४हात्। इन्द्रास्तोमाइ। भिरायवाः। इहा
२ २ ५ २ १ २र १ १ २
३। हाउवा३। बृ२३४हात्। समाइचीना। सच्च
२ १ १ १ १ २ २ २
भवाः। समा २स्वरान्। इहा३। हाउवा३। बृ२३४
५ २ १ २ १ २१र २ १ १ २ २ २
हात्। रुद्रागृणा। तपूर्वियाम्। इहा३। हाउवा३। बृ
५ २र २ १
२३४हात्। ए। बृहत्॥ १३॥

१ ऽ २ १र र र १ २ २
† अभीहाउ। त्वापूर्वपीतयाइ। इह। हा३१उवा
२ ५ १ र र र १ २ २
२३। सू२३४वाः। इन्द्रस्तोमेभिरायवाः। इह। हा३१
३ ५ ३ र २र १र
उवा२३। सू२३४वाः। समी। चीनासच्चभवःसमस्वरान्।
१ २ २ ३ ५ २१र र
इह। हा३१उवा२३। ष्ठ२३४वाः। रुद्रागृणन्तपूर्विया-

*,† "श्रयदीते द्वे"—इति आ० ब्रा० १, १, ८।

१ २ २ ३ ५ २ १
म्। इष। हाइ१उवा२३। सू२३३वाः। ए३। सुवा
१ १११
२३४५ः॥ १४॥

अनयोर्व्याख्यानम्— १भा० ५१९ पृष्ठे द्रष्टव्यम्। १३,१४

२र र २ १ २ १ऽ २ऽ
* हाउपिबासुता। स्यरसिनर३ः। होइ। ३। हाउ
१ र १ र २ १र २ १ २ऽ
३वा। सचोनरः। मत्स्वानइन्द्रगोमता३ः। होइ। ३। हा
२ १ र २र १ र २र १ २ १
उवा। सत्यमोजः। आपिर्नोबोधिसधमा३। होइ। ३।
२ऽ १ र २ र १ २ १ २ऽ
हाउ३वा। स्वर्ज्योतिः। दियेवधे३। होइ। ३। हाउ
२र१र २ १र २ र १ २ १
३वा। एस्थादिदम्। ३। अस्मा॒अवन्तुतेधिया३ः। हो
२ऽ १र २र १र २ १ २र
इ। ३। हाउ३वा। द्यौरक्रान्भूमिरततनत्समुद्र॒समचू
१ ११११
कुपत्। इ इडा२३४५॥ १५॥

अस्य व्याख्यानम्—१भा० ४९६ पृष्ठे द्रष्टव्यम्। १५

२र २ १ २ १
† हाउ३। बृहात्। ३। बृहत्। ३। बृहात्। ३।

---

* "वरुणस्य देवस्यामम्"—इति आ० ब्रा० २, १, ९।

† "बबहु वस्यामम्"—इति आ० ब्रा० २, १, ९।

२ १ १ र १ २ २ र १ २
बृहदिन्द्रायाइगायाश्ता२। मरुतोवृत्राइहान्ता१मा२म।
२र र १ २ २र र र १ २
येनज्योतिरजनयन्दृश्तावा१ध्र्वा२ः। देवन्देवायाइजागृ१वी
२र १ १ २ १
२३। हाउ३। बृहात्। ३। बृहत्। ३। बृहान्। २।
२ १ २र २ १
बृहा३१उ। वा२। ए। बृहत्। ३॥ १६॥

अस्य व्याख्यानम् –१भा० ५१४ पृष्ठे द्रष्टव्यम्। १६

१र १र १ २ ३र
* ऐराया२त्। ३। ऐराया२३त्। सुवरा३४। हा
२ २र र १ २ २ र र ऽर १ १
होइ। पुनानःसोमाइधारा१या२। अपोवसानोइआर्षा
२र र र १ २ २र
१सी२। आरत्नधायोनिमृतस्याइसाइदा१सी२। उत्सो
र र १ २ १र १र
देवोहीइराण्या१या२ः। ऐराया२त्। २। ऐराया२३त्।
१ २ ३र २ ५र र २ २र१र र र
सुवरा३४। हाहा३४। औहोवा। ए३। देवादिवाज्यो
२ १ १ १ १
तीर३४५ुः॥ १७॥

अस्य व्याख्यानम्—२भा० ७६ पृष्ठे द्रष्टव्यम्। १७

२र १र २ २ र र २र २ १
† हावोहोहाउ। अभित्वावार्षाइभासुताइ। अभि

*,† "ऐरयैरिते द्वे"—इति सा० ब्रा० ३. २, ८ ६

र २र १र २ र र २र १र
त्वावा। षाभासुताइ। अभित्वावार्षा३भासुताइ। औहो
२र १र २ र २र २ १ १र
हावौहो२। सुतꣳहजामी३पीतयाइ। सुतꣳहजा। मी
१र २ र २र २र १र २
पीतयाइ। सुतꣳहजामी३पीतयाइ। हावौहोहाउ।
२ र र २र १ १र २र १र
त्वम्याविया३म्रू३हीमदाम्। त्वम्याविया। म्रूहीमदाम्।
२ र र २र १र २र १र ऽ २
त्वम्याविया३म्रू३हीमदाम्। औहोहावौहो२। उहुवा
२ १ १
३हाउ। वा३। हस्॥१८॥

अस्य व्याख्यानम्—१भा० ३९८ पृष्ठे द्रष्टव्यम्। १८

२र २ ३ ५ २र
* हाउ३। हौवाओ२३४वा। हाहा३१उवा२।
१र १ २र १र २र १र २ १ र र २ १र २र र
पुनानःसोमधारया। अवोब्रुहदिहाइडा। अपोवसानो
१ र २ १ र र १र २ १र र २ १ १ २
अर्षसि। अवोब्रुहदिहाइडा। आरत्नधायोनिमृतस्यसी
१र १ र र १ र २र १र २ १ १ १र
दसि। अवोब्रुहदिहाइडा। उत्सोदेवोहिरण्ययः। अवो
२ १ र र २र २ ३ ५ २र
ब्रुहदिहाइडा। हाउ। ३। हौवाओ२३४वा। हाहा३१

* "आजिगमेहे"—इति आ० ग्रा० ६,१,९। तत्र पूर्वमिदम्।

उवा२ । सुवर्जगन्मामहस्पृथिव्यादिवमाशक्रेमवाजिनीय
मम । हस् । इटइडा२३४५ ॥ १९ ॥

अस्य व्याख्यानम्—२भा० ७६ पृष्ठे द्रष्टव्यम् । १९

* औहोवाऔहोवाऔहो३वा । तवेदिन्द्रावमंवसु ।
त्वम्पुष्यसिमध्यमम् । सत्राविश्वस्यपरमस्यराजसि । न
किष्ट्वागोषुवृण्वते । औहोवाऔहोवाऔहो३वा । सुव
र्जगन्महेवानामवसावयꣳशक्रेमंवाजिनीयमम् । सुवर्जगन्म
महस्पृथिव्यादिवमा । हस्वृहन्नमा२३४५ः ॥ २० ॥

† औहोऔहो३वा । ३ । इडा२३भिरा३४ । औहोवा ।
तवेदिन्द्रावमंवसु । त्वम्पुष्यसिमध्यमम् । सत्राविश्वस्य
परमस्यराजसि । नकिष्ट्वागोषुवृण्वते । औहोऔहो३

---

* "आङ्गिरसे द्वे"—इति आ० ब्रा० ३, २, ६ । तत्रोत्तरमिदम् ।

† "बार्हस्पत्यम्"—इति आ० ब्रा० ३, २, ६ ।

२ १ २ ५र र १र र२१
वा। ३। इडा२३भिरा३४। औहोवा। इडास्तुवो वृहन्नमा
१११
२३४५ः॥ २१॥

अनयोर्व्याख्यानम्—१भा० ५५७ पृष्ठे द्रष्टव्यम्। २०,२१

२र २र र र र र २र
* हाउ। ३। औहोआत्वासहस्रमाशताम्। हाउ
२ १ २ २र २ १ २
३। युक्तारा१था२३इ। हाउ। ३। हिराण्या१या२३इ।
२र १ २ २र १ २
हाउ। ३। ब्रह्मायू१जा२३ः। हाउ। ३। हारयइ।
२ १ २ २र १ २ २र
इन्द्राइआ१इना२३ः। हाउ। ३। वहान्तू१सो२३। हा
२र र २ २ १ ६ ५ ५ ५
हाउहाउ। मपी३ः। ता२३४याइ। उहुवा३हाउ। वा।
१
हस्॥ २२॥

अस्य व्याख्यानम्—१भा० ५०७ पृष्ठे द्रष्टव्यम्। २२

२ र र र र र र २र र २ र
† उहवाओहा। औहोवा। शन्नोदेवीः। उहुवा।
र र १र० ३र २ २ १ ३ २ १ २
ओहा। औहोवाहाउ। वा। आवत्। अभिष्टा२३या

* "भारद्वाजम्"—इति आ० ब्रा० ३, ९, ९।

† "आथर्वणम्"—इति आ० ब्रा० ३, २, ९।

२ र र र  २र र र  २ र  २ र
इइ। उहुवाओहा। औहोवा। मनोभवा। उहुवा

र र  २र  ३र २  १ २  २ १र  २
ओहा। औहोवाहाउ। वा। इवः। तुपीतार३याइ

२ र र र  २र र र  २र  २ र र
इ। उहुवाओहा। औहोवा। मंयोरभो। उहुवाओ

र  २र ३र २  २  १ २  २१  २
हा। औहोवाहाउ। वा। ज्योतिः। सुवन्तूर३नाइः।

२ र र र  २र ३र २  २  ३ १ १ १ १
उहुवाओहा। औहोवाहाउ। वाइ। ईर३४५॥ २३॥

पञ्च स्याक्षामन्—१भा० १४३ पृष्ठे द्रष्टव्यम्। २२

२४ (चतुर्विंशतितमं) साम— २भा० २४४ पृष्ठे मुद्रितम्।

७र  २ १ २र १  २ १ र  २
* हाउ। ३। बृहद्भामम्। ३। बृहत्पार्थिवम्। ३।

२ १ २ १ २  २ १  २ १ २र १
बृहदन्तरिक्षम्। ३। बृहद्दिवम्। ३। बृहद्भामम्। ३।

२ र  १ २  ३र र  र  १ २
कयानश्चित्रा३आभूर्वा२त्। ऊतीसदावृ३धाःसा१खा२।

२ र  १ २  २र  २ १ २र १
कयाशचिष्ठा३यावा१र्ता२३। हाउ। ३। बृहद्भामम्।

२ १ र  २  २ १ २ १  २  २ १ १
३। बृहत्पार्थिवम्। ३। बृहदन्तरिक्षम्। ३। बृहद्दिवम्।

---

* "बृहतीवामदेव्ये द्वे"—इति आ० ग्रा० ३, १, ९। तत्र पूर्वमिदम्।

१ १ २र १ २ १ र १र ३र २ २
३। बृहद्वामम्। २। बृहद्वामम्। औहोवाहाउ। वा।

र २ १२र १ २र २ १ र २र १ २र २र १र र
ए। बृहद्वामम्। ए। बृहद्वौवामम्। ए। वामेभ्यो

२र १ २र २र १ २र १ २र १
वामम्। ए। वामम्। वामम्। वामम्॥२५॥

२ २ १ २ २ २ १ २ २ १र
* बृहद्वामम्। २। बृहद्वामम्। कयानश्चाइ।

२ ५ २र १ २ १ १ २ ३ ५ २
त्रआ२भूर२३४वात्। ऊताइसदा। वार्द्धःसार२३४खा। क

१र ७ २ ५ ३ २ १ २ ३ २
याशचाइ। छयार२वा२३४र्त्ता। बृहद्वामम्। २। बृहत्।

१र २ ५ २ २र २ १ २र १
वामा३उवा। ए। बृहद्वामम्। ३॥२६॥

अनयोर्व्याख्यानम्—१भा०३८४पृष्ठे द्रष्टव्यम्। २५,२६

२र र र र १ २र १र र
† औहोइत्वामिद्धिहवामहा३ए। सातौवाजा।

१ २ ३ ५ १ २ ३र ४र ५ २ १
स्याकारा२३४वाः। तुवा३४। औहोवा। वृत्राइषुवा

१ २ १ २ ३ ५ १र र
इ। इन्द्रासौ३१त्। पतिन्नार२३४राः। त्वाङ्काष्ठा३४।

* "बृहतीवामदेव्ये"—इति आ० ब्रा० २, १, ८। तद्योत्तरमिदम्।

† "भरद्वाजस्य बृहत्"—इति आ० ब्रा० १, २, ८।

औहोवा । ए२ऽर्वा२३४ । ताः । उहुवा६वाउ । वा। हस ॥ २७ ॥

अस्य व्याख्यानम्—१भा०४८१ पृष्ठे द्रष्टव्यम् । २७

॥ इति ग्रामे अरण्यगाने प्रथमस्यार्द्ध प्रपाठकः ॥

---

॥ हरिः ॐ ॥

* इया३होइ । ३ । इन्द्रन्नरो । ने३मधि । ताहवन्ताइ । यत्पारियाः । युनज । ताइधियस्ताः । शूरोनृषा । ता३श्रव । संस्यकामाइ । आगोमताइ । व्रजेभ । जातुवन्नाः । इया३होइ । २ । इया३होर । या२३४औहोवा । ई२३४५ ॥ १ ॥

† औहोइया । ३ । इन्द्रन्नरो । ने३मधि । ताहवन्ता इ । यत्पारियाः । युनज । ताइधियन्ताः । शूरोनृषा । ता

*,† "वसिष्ठ जमदग्नो रज्ञौ द्वावनस्य जमदग्नोर्वा"—इति आ० ब्रा० १,१,१० ।

१ २ ३ ४र ५ १र १र २१र २र ३४
३अव। संस्वकामाइ। आगोमताइ। व्रजेभ। आतुव
५ १र २र १र १र ३ १११११
स्नाः। औहोइया। २। औहो३४५याई५ई। ई२३४५ ॥२॥

अनयोर्व्याख्यानम्—१भा० ६४२—पृष्ठे द्रष्टव्यम्।१,२

१२र २ ३ २र १ २ १र
* अयामायाम्। २। अयामायाम्। स्वादिष्ठ
१ २ ३ ३ १ २ २ ३ ४
या२। मदाइष्ठा२३४या। पवस्वसो२। मधारा२३४या।
१ र १ २ २ ५ ३ २र १ २
इन्द्रायपा२। तवाइसू२३४ताः। अयामायाम्। २।
३ २र १ २ ५र र ३ १११११
अयाम्। या२। या२३४ः औहोवा। ई२३४५ ॥ ३ ॥

अस्य व्याख्यानम्—१भा० १०पृष्ठे द्रष्टव्यम्। ३

१र १र र र र र र १ २ ३
† हाउ। ३। औहोवाणहियाहाउ। धार्त्ता। दाइ
२ र १ २ १ र १ २ १ २ १र १र
वःपवतेक्त्वियः। रसोरसो। रसः। हाउ। ३। औ
र र र र र १ २ १ र २र १र २
होवाणहियाहाउ। दाक्षाः। दाइवानाममुमादियः।
१ २ १ २ १ २ १र १र र र र र
नृभीर्नृभीः। नृभीः। हाउ। ३। औहोवाणहिया

* "आङ्गिरसामर्कः"—इति वा० ब्रा० ३, २, १०।
† "होर्वेतमसोऽर्कः"—इति वा० ब्रा० ३, २, १०।

र　१ २　१ र २र र　१ २ १ २ १ २
हाउ । हारी । मार्जानोअत्योनस । त्वभीत्त्वभीत्वभीः ।

१र　२र र र र　र १ १　१ २　१ र
हाउ । ३ । औहोवाएहियाहाउ । वार्या । पाजाए

२ र र　१ २ १ २　१ २　२र　१र र
सिक्ताणुषेनदी । षुवाषुवा । षुवा । हाउ । ३ । औहो

र र　२　२　३ १ १ १ १
वाएहियाइहाउ । वाइं । ई२३४५ ॥ ४ ॥

अस्य व्याख्यानम्—२भा० १८४ पृष्ठे द्रष्टव्यम् । ४

२र　२ र　१ २　१ २
* हाउ । ३ । प्रवइन्द्रायबृहातार्द्द । हातार्द्द । २ ।

१र　र　१ २　१ २　२र
हाउ । ३ । मरुतोब्रह्मअर्चाता । चाता । २ । हाउ ।

२　र　१ २　१ २　२र
३ । वृत्रᳪहनतिवृत्रहाशतक्रातूः । क्रातूः । २ । हाउ

२ र　१ २　१ २　२र
३ । वज्रेणशतपर्वाणा । र्वाणा । २ । हाउ । ३ ।

२　११ १ १
वाइ । इट्इडा२३४५ ॥ ५ ॥

२र　२ र २र　१ र २
† हाउ । ३ । सन्त्वानोनवुः । ३ । वनोनवुः । ३ ।

२ १　१ २र　२　र　१ २　१
मरुतः । ३ । विश्वस्मात् । ३ । प्रवइन्द्रायबृहातार्द्द । हा-

---

* "मरुतामर्कौ द्वौ"—इति आ० ब्रा० ३, २, १० ।

† "संक्रोभो वीणरः"—इति आ० ब्रा० १, २, ३० । मरुतामित्येव ।

ताई। २। मरुतोब्रह्मअर्चाता। चाता। २। वृत्रᳲह

नतिवृत्रहाशतक्रातूः। क्रातूः। २। वज्रेणशवपर्वाणा।

र्वाणा। २। हाउ। ३। सत्वानोनवुः। अनोनवुः।

३। मरुतः। ३। विश्वास्मात्। २। वाइश्वस्मा२३४

औहोवा। ई२३४५॥ ६॥

अनयोर्व्याख्यानम्—१भा० ५३२पृष्ठे द्रष्टव्यम्। ५,६

* होहोवा। ई। ईया। ३। अग्निमूर्द्धादीश्वाःका१

कू२त्। पतिःपृथिवीं३याआ१या२म्। अपाᳲरेताᳲसी३

जाइन्वा१ती२। होहोवा। ई। ईया। २। होहोवा।

ई। ई२। या२३४। औहोवा। ए। अग्निमूर्द्धाभव

हिवः॥ ७॥

अस्य व्याख्यानम्—१भा०१३५ पृष्ठे द्रष्टव्यम्। ७

* "अग्ने रर्कः"—इति ग्रा० ग्रा० ३, ९, १०।

* हावा। ईया। औ२३होआ३। आयाम्। पूषा
२। रयिर्भा२३४गाः। सोमाः। पुना२। नोअर्षा२३
४तो। पातोः। विश्वा२। स्वभूमा२३४नाः। वाया।
स्वद्रो२। दमौऊ२३४भाइ। हावा। ईया। औ२३
होआ३४। औहोवा। ई२३४५॥ ८॥

अस्य व्याख्यानम्—२भा० १५१ पृष्ठे द्रष्टव्यम्। ८

९, १०, ११ सामानि—२४६, २४७, २४८ पृष्ठेषु मुद्रितानि।

† पातो२ः। ३। दिवआ। पातो२ः। ३। अन्तरि
क्षस्या। पातो२ः। ३। पार्थिव। स्या। पातो२ः। ३।
अपामोषधी। नाम्। पातो२ः। ३। विश्वस्यभूत।
स्या। पातो२ः। पातो२३ः। पा२ता२३४। औहोवा।
ए। पतिर्दिवः। ए। पतिरन्तरिक्षस्य। ए। पतिःपार्थि

* "प्रजापतेरर्कः"—इति आ० ब्रा० ३, २, १०।

† "अर्कपौवाय"—इति आ० ब्रा० ३, २, १०।

१ २र १ १ १र र २र र २र १ २ १ १ र १
वस्य। ए। पतिरपामोषधीनाम्। ए। पतिर्विश्वस्यभूत

२र १ र १ १ १ १ १
स्य। ए। सुवर्ज्योतीर३४५ः॥ १२॥

अस्य मूलं न लब्धम्, अपि तु स्तोभः, यद्वैषः—

१ २र १ २ २ १ २ १ २र २
पतिः। दिवः। अन्तरिक्षम्। स्य। पार्थिवस्य। अ

२ १ २र १ २र २ १ २र
पाम्। ओषधीनाम्। ओष। धीनाम्। विश्वस्य।

२ १ २ १ २ १ २र १ २र
भूतस्य। आयुः। चक्षुः। ज्योतिः॥ १॥ ६॥ १२॥

१२ साम २भा० २५९ पृष्ठे मुद्रितम्।

१ १ २ ५ २ १ १ २
* हुय। होइः। हुयहुयई३या। हुय। होइ। हुय

५ २ १ १ २ ५ २ २ १
हुयई३या। हुय। होइ। हुयहुयई३या। इन्द्रन्नरो।

२ १ २र ३ ४ ५ २ १र २ १ २
ने३मधि। तात्ववन्ताइ। यत्पारियाः। युनज। ता

३ ४ ५ २र १र २ १ २ ३ ४र ५
इधियस्ताः। शूरोनृषा। ता३श्रव। सश्चकामाइ।

२र १र २ १र २र ३ ४ ५ १ १
आगोमताइ। व्रजेभ। जातुवन्नाः। हुय। होइ।

* "अर्क पुष्पे द्वे"—इति आ० ग्रा० ३, १, १०। तच पूर्वमिदम्।

२ ५ २ १ १ २ १ २
इयइयईश्या। २। इयहोइ। इयइय। ई२। या२३४।
५र र २१११११
औहोवा। ई२३४५॥१४॥

१ १ २ ५ १ २ १
* उव। होइ। उवउवऊश्वा। ३। इन्द्रंनरो।
२ १ १र २३४५ २१र २१ २ ३४
ने३मधि। ताहवन्ताइ। यत्पारियाः। युनज। ताइधिय
५ १र१र २ १ २ ३४र५ १र१र
स्ताः। शूरोनृषा। ताइश्रव। संश्वकामाइ। आगो
२१र २र३४५ १ १ २
मताइ। ब्रजेभ। जातुवन्नाः। उव। होइ। उवउ
५ २ १ १ २ १ २
वऊश्वा। २। उव। होइ। उवउव। ऊ२। वा२३४।
५र र ३११११
औहोवा। ई२३४५॥१५॥

अनयोर्व्याख्यानम्— १भा० ६४२ पृष्ठे द्रष्टव्यम्। १४,१५

१र २र ३ ४र ५ १र१र
† हाउ। ३। आज्यदोहम। ३। मूर्द्धानन्दायि।
२ १ २३ ४५ १र१र २१र १र२
वा३अर। तिम्पृथिव्याः। वैश्वानराम्। ऋतेआ। जात

---

* "अर्कपुष्पे द्वे"—इति आ० ब्रा० १,१,१०। तत्र द्वितीयमिदम्।

† "वैश्वानरस्य सौभाग्यदोहायाज्यदोहानि वा"—इति आ० ब्रा० १,२,११। तत्र प्रथम मिदम्। ज्येष्ठसामाज्यदोह मिति वैदिकसङ्केतः।

४ ५ २ १ २ १ २ ३ ४र ५
मग्नीम्। कविꣳसम्रा। जा३मति। थिञ्जनानाम्।
२र १ २ १ २ ३ ४र५ २र २र २
आसन्नःपा। त्रा३ञ्जन। यन्तदेवाः। हाउ। ३। आज्य
४र ५ २र ३ ४ ५ २र २र १ २
दोहम्। २। आज्यदोपुहाउ। वा। ए। आज्यदोह
२र २र १ २१११११
म्। ए। आज्यदोहा२३४५म्॥ १६॥

२र २र १ २ २र १र
* हाउ। ३। ऊम्। चिदोहम्। ३। मूर्द्धानन्दा
२ १ १ २ ४ ५ २र १र १ १ र
इ। वा३अर। तिम्पृथिव्याः। वैश्वानराम्। ऋतआ।
२र ३ ४ ५ २ १ २ १ २ ३ ४र ५
जातमग्नीम्। कविꣳसम्रा। जा३मति। थिञ्जनानाम्।
२र २ १ २ ३२र५ २र २र
आसन्नःपा। त्रा३ञ्जन। यन्तदेवाः। हाउ। ३। ऊम्चि
१ २ २ १ २ २ ५ २ २ ३११
दोहम्। चिदोहम्। चिदो३हाउ। वा३। ई२३
११
४५॥ १७॥

२र १ २ २र १र २
† हाउ। ३। ज्योहम्। ३। मूर्द्धानन्दाइ। वा३

---

* ई-निधन माज्यदोह मिति वैदिक-सङ्केतः।

† ऋत-निधन माज्यदोह मिति च वैदिक-सङ्केतः।

१　२ ३ ४ ५　२र १र　२ १ र　१ २ ३ ४ ५
अर। तिमपृथिव्याः। वश्वानराम्। ऋतआ। जातमग्नी

२ १　२ १　१ २ ४र ५　१र
म्। कवि ँ सम्रा। जा३मति। थिञ्जनानाम्। पा

१　१ १　१ २ ४र ५　२र　१
सन्नःपा। त्रा३ञ्जन। यन्तदेवाः। हाउ। ३। ओ

२　१ २ २ १ ११
हम्। २। ओ३हाउ। वा३। ए३। ऋतम्॥१८॥

एतेषां व्याख्यानं—१भा० २०५ पृष्ठे द्रष्टव्यम्। १६-१८

२र　१र र　२ १ र १ र १र　१ ३
* सुरूपकृत्नुमूतये। ३। सुदुघामिवगोदुहे। जुहुम

२　२र १ २　१र १ २
साइ। द्याविद्यवाइ। २। द्याविद्यवा३१उ। वा२३।

१　१　१
उम्। उम्। उम्॥१९॥

अस्य व्याख्यानम्— १भा० ३६६ पृष्ठे द्रष्टव्यम। १९

२र　१　१　१　१
† हाउ। ३। आयि। ही। ३। आयि। ३। इया

२　२ १र र　१　१ २ ४ ५　१ १र
हाउ। ३। पिबासोमाम्। इन्द्र। मन्दतुत्वा। यन्ते-

---

* "इन्द्रस्य त्रय ऋषभा रैवतो वैराजः शाक्वर इति"—इति ब्रा० ब्रा० ३,९,११। तत्रेदं रैवतऋषभम्।

† वैराजऋषभमिदं द्वितीयम्।

२ १ १२४५ २र १र २ १
सुषा। वा३चरि। अश्वमद्रीः। सोतुर्बाहु। भ्या३ऽसुय।
२र २ ४ ५ २र १ २ १
तोमअर्वा। हाउ। ३। आयिही। ३। आयि। ३।
१ २ १ ऽ२ २ २ १ १ १ १
इयाहाउ। २। इया३हाउ। वा३। ई२३४५॥ २०॥

अस्य भाष्यमम्—१भा० ८१५ पृष्ठे द्रष्टव्यम्। २०

२ १र र र र र र र २ १ २
* ओ३१म्। ३। स्वादोरेइत्थाएविषूएवतआ। मं
१र १ र र र र र र २ १ २ १
योः। २। मधोरेपिबाएन्तिगोएरियआ। हविः। २।
र र र र र र र र २ ऽ १ र र र
याआएन्द्रेणाएसयाएवरिया। सुवः। २। वृष्णाएमदा
र र र १र १ १र १र र र र र र
एन्तिशोएभथा। आ। ज्योतिः। २। वस्वोरेअनूएस्वराए
२ १ १ २ ५ १
जियमा। ओ३१म्। २। ओ३१२३४। वा। इट्इडा
११११
२३४५॥ २१॥

अस्य भाष्यमम्—१भा० ८१२ पृष्ठे द्रष्टव्यम्। २१

१र र १र १ र र १
† एपुरोजिती। वोअन्धसःसुतायमादया२ई त्नवा

---

* शाकुर ऋषभमिति तृतीयम्।

† "इन्द्रस्य यशोऽतीषङ्गाः अथापरं रौद्रः"—इति आ० ग्रा० १,२,११।

१ १ २ १र १र १ १
यि । इडा । जवा । मेआतमा २म्भसः । यथा ।
१ २ २ १र १ १ १ २ २
दायिवी । सह्लूमिया २ददायि । अथा । जग्रम् । श्र
१ १ १ १ र २ २
र्ममश्वा २यि । अवाः । मथा । अपस्वान७अया१इष्टा२
२ १ र र र १ १ २ १
ना । सखायोदीर्वजार२चोयि । क्रायमा३१उवार२३ । इट्
१ ११ १
इडा२३४५ ॥ २२ ॥

अस्य व्याख्यानम्—२भा० ६पृष्ठे द्रष्टव्यम् । १२

१ २ १ र र १ १ १
* एआसा । जिवक्कारथ्ये यथा २जाउ । इडा । मा
२ २ १ १ १ १ २ २ १र र
सा । व्य७म्रुर्मदा २या । अथा । धाया । मनोतापृथ
र १ १ १ २ २ १र १
मामना २यिषा । इडा । आपृह्व । द्स्नोगिरा २इष्टाः ।
१ १ २ २ १र र र १ १
अथा । दाग्रा । स्वसारो अधिसानो २मव्यायि । इडा ।
१ २ २ १र १ १ १ २ २ १
य्याइनो । नयोनिमा २सदात् । अथा । मार्जा । तिव
र ऽ १ १ ११११
क्षि७सदनेषुवार२क्षा३१उ । वा२३ । इट्इडा२३४५ ॥ २३ ॥

अस्य व्याख्यानम्—२भा० २४पृष्ठे द्रष्टव्यम् । १२

---

* "इन्द्रस्य तयोऽभिमन्त्राः यथापरं ० ०, वासवः"—इति भा० भा० ३,१,११ ।

* एआभी । नवन्तआ२ । इहआ३१उवा२ । त

रत्समन्दीधावति । प्रायम् । इन्द्रस्यका२ । मियमा३१

उवा२ । धारासुतस्यान्धसः । वात्सम् । नपूर्वआ२ ।

युनियाऽ३१उवा२ । तरत्समन्दीधावति । जातम् । रि

हन्तिमा२ । तरआ३१उवा२३ । इडाइडा२३४५ ॥ २४ ॥

अस्य व्याख्यानम्—२भा० ५९ पृष्ठे द्रष्टव्यम् । २४

† हाउ । हौवाओ२३४वा । ३ । ए । औहोहोवा

हाउ । वा । ईडा । धर्त्तादिवःपवतेकृत्व्योरसः । ई

डा । २ । दक्षोदेवानामनुमाद्योनृभिः । ईडा । २ । ह

रिःसृजानोअत्योनसत्वभिः । ईडा । २ । वृथापाजाꣳसि

---

* "इन्द्रस्य वयोऽतिषङ्गाः चयापरं ००,००, पार्जन्यो वैश्वदेवो वा"—इति ब्रा० ३.२.११ ।

† "प्राजापत्याश्चत्वारः पदस्तोभा गोतमा वा वैश्वामित्रा वैन्द्राग्ना वा"—इति ब्रा० ३.२.११ । अस्येडपदस्तोभ मिदं प्रथम मिति वैदिकसङ्केतः ।

त्मणुषेनदीषुवा१। हाइ। हौवाओ२३४वा। ३। ए।
औहोहोवाहाउ। वा। ईडा॥२५॥

* हाउ। ३। हौवाओ२३४वा। ए। औहौहोवा
हाउ। वा। धर्त्तादिवःपवा। ईडा। तेक्षत्व्योरसः।
ईडा। दक्षोदेवानामनुमाद्योनृभिः। ईडा। हरिः
सृजानआ। ईडा। त्योनमत्वभिः। ईडा। वृथापा-
जा२सित्मणुषेनदीषुवा१। हाउ।३। हौवाओ२३४वा।
ए। औहौहोवाहाउ। वा। ईडा॥२६॥

† औहौहोवा२। ओवा२। ए। औहौहोवाहाउ।
वा। धर्त्तादिवःपवा। ईडा। तेक्षत्व्योरसः। दक्षोदे
वानामा। ईडा। नुमाद्योनृभिः। हरिःसृजानआ।

---

* चरितपदस्तोभ मिदं द्वितीय मिति वैदिकमहान्तः।

† चतुरिडपदस्तोभ मिदं तृतीय मिति वैदिकमहान्तः।

१ॅर २र १ २ १ २र१र र २ र १र र १
इडा। त्योनमत्वभिः। वृथापाजाᳪसिह्न। इडा। औ
२र १र १र २र १र र २र १ १ २
होहोवा२। ओवा२। ए। औहौहोवाहाउ। वा। ए
र १र २
षेनदीषुवा१॥ २७॥

१ २र ४ ५ २र १र र २र १ २
* औऔहोवाहाइ। ए। औहौहोवाहाउ। वा।
१ १र १ १ २ र १ २ १२ १र
धर्त्ता। दी२। वःप। वा। तेक्रत्व्यः। रसः। दक्षो
२र१र र २ १र २र १ १ १र र १ २ १र१र
देवानामनुमाद्योनृभिः। इडा। हरिः। सा। जानोअ।
२र १ १ २ १ २र१र र २ र १र २
त्योन। सत्वभिः। वृथापाजाᳪसिह्नाएषेनदीषुवा१।
१ २र ४ ५ १र १र र २र १ २
औऔहोवाहाइ। ए। औहौहोवाहाउ। वा।
१र र
इडा॥ २८॥

एतेषां व्याख्यानम्—२भा०१८४पृष्ठे द्रष्टव्यम्। २५—२८

॥ इति ग्रामे अरण्यगाने प्रथमः प्रपाठकः॥



* द्विरिड पदस्तोभ मिदं चतुर्थं मिति च वैदिकसङ्केतः।

॥ हरिः ॐ ॥

* अभाइमाडे । ३ । चर्षणीधृतम्मघवानाइमूक्थाश्या
२म् । इन्द्रङ्गिरोबृहतीरभ्याइनूषा१ता२ । वावृधानं
पुरुहूतꣳसूइवाक्ता१इभी२ः । अमर्त्यञ्जरमाणन्दी३वाइ
दा१इवे२ । अभाइमाहे । २ । अभा२३इ । मा२ । हा
२३४ । औहोवा । सर्पसुवा२३४५ः ॥ १ ॥

† अभिप्रमꣳहोइराइमाडे । ३ । चर्षणीधृतम्मघवा
नाइमूक्था१या२म् । इन्द्रङ्गिरोबृहतीरभ्याइनूषा१ता२ ।
वावृधानम्पुरुहूतꣳसूइवाक्ता१इभी२ः । अमर्त्यञ्जरमाण
न्दी३वाइदा१इवे२ । अभिप्रमꣳहोइराइमाहे । २ । अ-

---

* "इमे सर्पाणि महासर्पाणि सर्पसामानि वा । अथापरमग्नं च (सर्पमिति शेषः) । * * * अथापरं चाथर्वाणि चत्वारि (तत्र प्रथममिदम्)" —इति आ० ब्रा० ३,२,१२ ।

† "पृथिव्याश्च (सर्पमिति शेषः) । * * * अथापरं चाथर्वाणि चत्वारि (तत्र द्वितीयमिदम्)" —इति आ० ब्रा० ३,२,१२ ।

१ १ ३ ५र र
भिप्रमऌहोइरा२३इ। मा२। हा२३४। औहोवा।
१ २१ १११११
प्रसर्पसुवा२३४५ः॥ २॥

२ऽ १ र१ २ १ र ११ २ऽ
*. हाउ३वा। चर्षणीधृतम्मघवानमुक्थ्यम्। हाउ
१ र २ १र २र २ऽ २र र
३वा। इन्द्रङ्गिरोबृहतीरभ्यनूषत। हाउ३वा। वावृधा
२ र१ १२ १ २ऽ १ २ १ २र
नम्पुरुहूतऌसुवृक्तिभिः। हाउ३वा। अमर्त्त्यञ्जरमाण
१र २र २ऽ १ २१ १११११
न्दिवेदिवे। हाउ३वा। उत्सर्पसुवा२३४५ः॥ ३॥

एतेषां व्याख्यानं—१भा० ७६८ पृष्ठे द्रष्टव्यम्। १—३

२ऽ १ २ १ २ १र २र १
† हाउ३वा। सुवःसऌसर्पन्तः। नवेदिन्द्रावमंवसु।
२ऽ १ २ १ २ १ २ १
हाउ३वा। सुवःसऌसर्पन्तः। त्वम्पुष्यसिमध्यमम्।
२ऽ १ २ १ २ २१र २ १ २र
हाउ३वा। सुवःमऌमर्पन्तः। सत्राविश्वस्यपरमस्यराजसि।
२ऽ १ २ १ २ १ २र १र १ र २ऽ
हाउ३वा। सुवःमऌसर्पन्तः। नकिष्ट्वागोषुवृण्वते। हाउ-

---

* "वायोव"—इति चा॰ ब्रा॰ ३,२,११। सर्पमिति शेषः। किञ्च "अथापरं वाभवाणि चत्वारि"—इति चा॰ ब्रा॰ २, २, ११। तत्र तृतीयमिदम्।

+ "अकारिवम"—इति चा॰ ब्रा॰ २,२,११। सर्पमिति शेषः। किञ्च "अथापरं वाभवा च चत्वारि"—इति चा॰ ब्रा॰ २,२,११। तत्र चतुर्थमिदम्।

इवा। सुवःसꣳसर्पन्तः। ए। सर्पतप्रसर्पतसुवर्गमेमते-वयम्॥ ४॥

* सुवःसꣳसार्पसꣳसर्पा२। २। सुवःसꣳसार्पसम्। सार२। पा२३४। औहोवा। तवेदिन्द्रावमंवसु। त्वम्पुष्यसिमध्यमम्। सत्राविश्वस्यपरमस्यराजसि। नकि-ष्ट्वागोषुवृण्वते। सुवःसꣳसार्पसꣳसर्पा२। २। सुवःसꣳ-सार्पसम्। सार२। पा२३४। औहोवा। ए३। सुव-र्गमेमार२३४५॥ ५॥

अनयोर्व्याख्यानम्—१भा० ५५०पृष्ठे द्रष्टव्यम्। ४,५

† स्वपायप्रव। पा। इहा। ई३या। एवन्त्विः। अभि-प्रियाणिपवतेचा३नोहा१इता२ः। नामानियह्वोअधियेषू-

---

* "आदित्यस्य च"—इति आ० ब्रा० २,१,११। सर्पमिति शेषः। किञ्च "अथापरं * * * पावमानानि चत्वारि। तत्र प्रथममिदम्।

† "दिवस"—इति आ० ब्रा० ३, २, १०। सर्पमिति शेषः। किञ्च "अथापरं * * * पावमानानि चत्वारि"—इति आ० ब्रा० ३, २, ११। तत्र द्वितीयमिदम्।

१ २ २र र र १ २ २
इवार्द्धा१ता२इ। आद्वर्यस्वप्ट्टतोवृ३ह्वाता१धी२। रथं
१ २ २र १ १
विश्वं च मरुद्दो३चाता१णा२ः। ह्रपायप्रस्। पा।
१२ ५ २ २र १ १ ३ २ १
इहा। इ३या। २। सुपायप्रसु। पा। इहा। ई२।
३ ५र र २र २र १ २र २र
या२३४। औहोवा। ए। सुपायप्रह्रपाय। २। ए।
२र १ २र ३ १ १ १ १
ह्रपायप्रह्रपाया२३४५॥ ६॥

अस्य व्याख्यानम्—२भा० १७३ पृष्ठे द्रष्टव्यम् ६

७,८ सामनी २भा० २५१-२५२ पृष्ठयोर्मुद्रितौ।

३र र र र र १ २ २र र
* स्वादोरित्थाविषूवताएहाउ। मधोःपिबन्तिगौरि-
र १ २ २र र र र १ २ २ र र
याएहाउ। याइन्द्रेणमयावराएहाउ। वृष्णामदन्तिशो-
र १ २ १र र र ५ २ १ २र
भथाएहाउ। वस्वीरनुस्वराजीयामे३हाउ। वा। ए।
१ २ १ २ १ १ ३ ५र र २र
दिशःप्रदिशः३क। पा२। ता२३४। औहोवा। ए।
१र २ र १र २र१ १ १ १ १
राजङ्गमेमस्वराजङ्गमेमा२३४५॥ ९॥

---

* "माण्डवे द्वे"—इति षा० ब्रा० ९.२.१२। किञ्च "यथापरं ● ● ● "द्विर्षां संषर्पं द्वे"—इति षा० ब्रा० ३.२.१२।

२र र र र र १ २ २र र
स्वादोरित्थाविषूवताऔहोवाउ। मधोःपिबन्तिगौ-
र १ २ २र र र र १ २ २र
रियाऔहोवाउ। याइन्द्रेणसयावरीऔहोवाउ। वृष्णा-
र र १ २ २र र र २
मदन्तिशोभथाऔहोवाउ। वस्वीरनुस्वराजियामोहोवाउ।
२ २र २ १र २ १ २ १ १ २ १र र
वा। ए। उहुवाविहुवाः। पार२। ता२३४। औहोवा।
२र २१र २ र १र २ र ३ १ १ १ १
ए। विराजन्नमेमस्वराजन्नमेमा२३४५॥ १०॥

अनयोर्व्याख्यानम्—१भा० ८३३ पृष्ठे द्रष्टव्यम्। ९.१०

२र र र २ २१ १
* औहोइत्वमिन्द्रप्रतूर्त्तिषू३ए। अभाइवाइस्वाः। आ-
२ २ ५ १ २र र १ २
सिस्पा२३४र्द्धाः। आशस्तिहाजनितावृ। वतूर२३रसाइ।
१ र २ ३र र १ १ ५ २
तुवा२३न्तूर्यातरीहो३। ऊम्मा२। प्या२तो३५हाइ॥ ११॥

अस्य व्याख्यानम्—१भा० ८२४ पृष्ठे द्रष्टव्यम्। ११

१ २ २र १ १ १ १
† एवाएमा। हा८असिद्धररिया। इडा। बृ।
२ १ २ १ २ २ १ १
हाउवा। आथा। वाडा। दित्यमहा८रपसाइ।

---

* "विश्वधिह"—इति आ० ब्रा० ३, १, १३।

† "यज्ञमार्यच च"—इति आ० ब्रा० ३, २, १३।

१ १ २ १ २ १ २ २र १र
इडा। हरिः। हाउवा। आथा। माह्वः। तेसतोमहि-
र १ १ १ २ १ २
मापना२इष्ठमा। इडा। मतिः। हाउवा। आथा।
१ २ २र१ १ १ ११११
माझा। देवमहा॰२असाइ। इडा२३४५॥ १२॥

अस्य व्याख्यानम्—१भा० ५६८ पृष्ठे द्रष्टव्यम्। १२

१३ साम १भा० २५३ पृष्ठे मुद्रितम्।

१र र १र र १र र २र
* हाउम्। ३। योवा। ३। योवाहाइ। ३।
१र२१ २१ २र १र२ १र२ १र १२१र २र १२र
यएकइद्विदयते। एक॰समैरयद्वधे। वसुमर्त्तायदाशुषे।
१र२ १र१ १र १रर२र १ २ १र२र१ २र १
एक॰समैरयन्महे। ईशानोअप्रतिष्कुतः। एकोवृषावि-
र २ १र २१ १र र १र र १र र
राजृति। इन्द्रोअङ्ग। हाउम्। ३। योवा। ३। योवा-
२र १र ५ २ २ ५ ११११
हाइ। २। योवा३हाउ। वा३। ई२३४५॥ १४॥

अस्य व्याख्यानम् १भा० ७६६ पृष्ठे द्रष्टव्यम्। १४

१ २ १ १र र २र १र १र र
† होवाहाइ। योनः। होवाहाइ। ३। औहोवा-

---

* "एकइयस"—इति आ० ग्रा० १, २, १३।

† "विदथम"—इति आ० ग्रा० ३, २, १३।

हाइ । ३ । इदामे । इदामे । पुराए । होवाहाइ । ३ ।
औहोवाहाइ । ३ । प्रवाए । स्यभ्राए । निनाए । होवाहाइ ।
३ । औहोवाहाइ । ३ । यतामे । उवाए । स्तुषाए । होवा-
हाइ । ३ । औहोवाहाइ । ३ । सखाए । यभाए ।
द्रमूए । तयाए । होवाहाइ । ३ । औहोवाहाइ । २ ।
औहोवा३हाउ । वा३ । इसवृहन्नमा२३४५: ॥ १५ ॥

अस्य व्याख्यानम् सप्तम् । १५

* हाउ । ३ । ऊर्वेविराज०स्वराजम् । ३ । हाओवा ।
३ । हा३औ२३४वा । हा३ओ२३४वा । हाउवा । मह्य
त्वामग्रजीजने । अभ्रातृव्योऽअनात्वम् । मह्यइन्द्रमजी-
जने । अनापिरिन्द्रजनुषासनादद । स्यभ्रातृव्यमजीजने ।
युधेदापित्वमिच्छसे । हाउ । ३ । ऊर्वेविराज०स्वराजम् ।

* "भ्रातृव्य"—इति ब्रा० ब्रा० २, २, १३ ।

२र ३र र १ १ ५ २
३। हाओवा। ३। हाइओर३४वा। २। हाउवा३।
२ २ १र ३ १ १११
३। अभिभूरसौर३४५॥१६॥

अस्य व्याख्यानम् १भा० ८१६ पृष्ठ द्रष्टव्यम्। १६

१ १ २र १ १ २ १र ऽ १
* हाउरेवा। तीर्नाः। इहा। सधमादा२। हा
२ ५ २ १ १ २ १
३१उवा२३। ई३४डा। इन्द्रा२इसन्त्। इहा। तुवि
र ऽ २ २ ५ २ र १
वाजा२ः। हा३१उवा२३। ई३४डा। क्षुमा२तोया।
१ २ १ र ऽ २ १ २ ५
इहा। भिर्मदेमा२। हा३१उवा२३। ई३४डा॥१७।

१ २ १ १ २र र १ १
† रा। वता२इः। नाः। इहा। औहोहो। इडा।
२ २र १ १ २र र १ १ २
सधा२। मादाइ। इहा। औहोहो। इडा। इन्द्रा२इ।
२ १ १ २र र १ १ २ २र १
सन्त्। इहा। औहोहो। इडा। तुवा२इ। वाजाः।
१ २र र १ १ १ २र १ १
इहा। औहोहो। इडा। क्षुमा२। तोया। इहा।

*,† "रैवते द्वे"—इति आ० ग्रा० ३, २, ११।

१र र १ १ २ २र १ १र र १
औहोहो । इडा । भिर्मा२ । देमा । इहा । औहोहो ।
१ १र १ २र १ २र१ १ १११
इडा । एरा । एवू । एरे२३४५ ॥ १८ ॥

अनयोर्व्याख्यानम्—१भा० ३५३ पृष्ठे द्रष्टव्यम् । १७,१८

९१ साम—२भा० २५४ पृष्ठे मुद्रितम् ।

१ २ २१र र र र र र र
* एआया । ऋचाद्धरिश्च्यापुनानोविश्वाद्वेषा॰सित-
१ १ १र र २ २ २ १ २
रतिसयू२श्वभाइः । इडा । ह्वरोनसयू१श्वा३भीः । धारा ।
२१ १ १ १ २ २ १
पृष्ठस्यरो२चताइ । इडा । धारा । पृष्ठस्यरो२चताइ ।
१ १ २ २ १ १ १र र
अथा । धारा । पृष्ठस्यरो२चताइ । इडा । पुनानो
२ २ २ २ १र र र र २ ४ ५
अरुषो१हा३रीः । विश्वायद्रूपापरिया । मियाइ । काभीः ।
२ १र र १ १ २ १ १ १
सप्तास्येभिरा२३हो । काभिरा३१उवा२३ । इट्इडा २ ३
१ १
४५ ॥ २० ॥

अस्य व्याख्यानम्—१भा० ९२५ पृष्ठे द्रष्टव्यम् । २०

२ र र र १र १ २र र र र
† आभिष्वाप्सूरनोनुमोवा । आदुग्धाइवधेनवईशान

* "नित्यवत्साय"—इति आ० ब्रा० ३, १, १३ ।

† "वसिष्ठस्य च रथन्तरम्"—इति आ० ब्रा० ३, २, ६३ ।

१ २ १ २ २ १ ४
मस्य जगतः। सुवा२३ईशाम्। आइशानमा२३इन्द्रा ३।
१ २ ४२ ५ ५ १
तास्थू२३४षा। औवा६। हाउवा। अस्॥ २१॥

अस्य व्याख्यानम्—१भा० ४८० पृष्ठे द्रष्टव्यम्। २१

३ २ १ २ ३ २ १ २ १२ १
* अयंवायाउ। २। अयंवायाउ। त्वामिद्धाइ।
१२ १२ १२ २ १२ १२ १२
हावामहाइ। ३। सातौवाजा। स्याकारवाः। ३।
१२ १ १२ १ १२ १ १२ १२
त्वांवृत्राइ। ष्विन्द्रसात्। पातिन्नराः। ३। त्वाङ्काष्ठा।
१२ १ ३ २ १ २ ३ २ १
स्वर्वताः। ३। अयंवायाउ। २। अयम्। वा२।
२ ५२ २ १२ २ १ २ १ १२ २
या२३४। औहोवा। ए। त्रिवृतंप्रवृतम्। २। ए। त्रि
१ २१ १ १ १ १
वृतंप्रवृता२३४५म्॥ २२॥

अस्य व्याख्यानम्—१भा० ४८१ पृष्ठे द्रष्टव्यम्। २२

१ २ २ १ १२ ३ २ ३
आक्रन्दयकुरुघोषमहान्तं
२ ३ १ २ ३ १ २ २ २
हरीन्द्रस्याभियोजयाशू।
२ १ २ ३ २ ३ २
मर्माविधन्दद्तामन्योअन्यं

* "जमदग्नेश्च सप्तकम्"—इति आ० ब्रा० १,२,२२।

२ १ २ ३ २ ३ १ २
शल्यात्मा पततु श्लोकमच्छ।
२उ ३१ २ ३१ २ ३१२
प्र यच्चक्रमरावणे सनता अभ्यवर्त्तयत्।
२उ ३ १ २ ३ १ २ ३ १२ ३ १ २
ज्योगित्तिस्र ओचाते शयाते केशवच्छिरः॥ २३॥

इयमृक्। गानग्रन्थेऽस्याः पाठकारणं व्याख्यानञ्च मृग्यम्। २३

२ ३ ३ २ १ २र ३ १ २
आ। क्रन्दय। कुरु। घोषम्। महान्तम्।
२ ३र१ २ १ २र ३ २ ३ ३ १ २
चरीदिति। इन्द्रस्य। अभि। योजय। आशूदिति।
३ १ २र ३ १ २र ३ ३ २
मर्माविधम्। मर्म। विधम्। ददताम्। अन्यः।
३ २ ३२ ३ २ ३ १ २ ३२
अन्। यः। अन्यम्। अन्। यम्। शल्यात्मा। शल्य।
३ ३ १ २र १ २र २ २ ३२
आत्मा। पततु। श्लोकम्। अच्छ। प्र। यत्। चक्रम्।
१ २र २ ३ ३१२ ३१२ ३
अरावणे। अ। रावणे। सनते। अभ्यवर्त्तयत्। अभि।
१ २र ३ २ ३२ ३ १ २र
अवर्त्तयत्। ज्योक्। इत्। तिस्रः। ओचाते। शया
१ २र १ २र
ते। केशवत्। शिरः॥ २४॥

---

प्रदर्शितश्चैः पदपाठ एषः। गानग्रन्थे पदपाठकारणं मृग्यम्। २४

